॥ श्रीशंकरप्रसन्न ॥

अस्मिन् प्रबंधे प्रमाणत्वेनोपन्यस्ता ग्रंथा वामतो लिखिताः। येषु येषु च प्राचीनेषु ग्रंथेषु त्रिदोषाणामुल्लेखो दृष्टस्ते ग्रंथा दक्षिणतो लिखिताः। क्वचित् क्वचित् ग्रंथानामनिर्देशः कृतः कुत्रचित् प्रमादात्स्खलितस्तथापि एतत् खलु निश्चितम्। ग्रंथानामनिर्देशो यत्र नास्ति तान्युद्धृतानि वाक्यानि चरकसुश्रुताष्टांगसंग्रहाष्टांगहृदयभावप्रकाशेभ्यो ग्रंथेभ्य एवेति निश्चयेनोच्यते।

1 चरकः
2 सुश्रुतः
3 अष्टांगसंग्रहः (वृद्धवाग्भट्टः)
४ भावप्रकाशः
५ बृहदारण्यकोपनिषत्
६ छांदोग्योपनिषत्
७ गर्भोपनिषत्
८ शारीरकोपनिषत्
९ स्मृत्यर्थसारम्
१० मनुस्मृतिः
११ ऋग्वेदः
१२ यजुर्वेदः
१३ यजुर्वेदब्राह्मण
१४ बृहद्योगतरंगिणी

१ भारतम्
२ विष्णुपुराणम्
3 ब्रह्मवैवर्तपुराणम्
४ गरुडपुराणम्
५ सौरपुराणम्
६ वायुसंहिता
७ हस्त्यायुर्वेदः
८ वृक्षायुर्वेद
९ बृहत्संहिता
१० सर्वार्थचिंतामणिः (ज्यो. ग्रंथ)
११ बृहज्जातकम्
१२ योगवासिष्ठम्

॥ श्रीशंकरप्रसन्न ॥

## विज्ञप्तिः॥

आयुर्वेदपारावारपारदृश्वानो ज्ञानेनानुभवेनच वृध्दतमा नीरक्षीरयो-
र्हंसा इव दोषगुणयोर्विवेचने पटीयांसो विद्वांसः परीक्षका एवं विज्ञाप्यन्ते।
त्रिधातुसर्वस्वनिबंधप्रणयनार्थं निबंधप्रणेतॄननुयोजयितुं प्रकाशिते सूचीपत्रे
निर्दिष्टानां चरकाष्टांगसंग्रहादिग्रंथानां वाक्यसमन्वयात् यत् सिध्दं
तत्वं तदेव यथामनीषं विचार्य त्रिधातुसर्वस्वमधिकृत्य प्रणीतेऽनति-
संक्षेपविस्तरेऽस्मिन् प्रबंधे नामूलं नानपेक्षितं च किंचिदुपन्यस्तम्।
सनिदानचिकित्सायास्त्रिदोषविज्ञानं प्रधानमंगम्। तस्मिन् बाधिते सर्वो-
ऽप्यायुर्वेदो बाधितः स्यात्। आयुर्वेदस्यानभ्यासाद्ये केचिदाक्षिपंति
तद्यथामति निरस्तम्। अनभ्यस्तायुर्वेदानामायुर्वेदविषयिका स्तुति-
र्निंदा वा न गणनार्हा। "न जालहार्दैर्निच विद्विषादरः॥" अस्मिन्प्रबंधे
त्रिदोषविज्ञानस्य फलवत्वमज्ञातार्थप्रतिपादकत्वमन्यैः प्रमाणैरबाधि-
तार्थत्वंच वाक्यद्वयं चरकाष्टांगसंग्रहादिग्रंथान् यथाज्ञानं सम्यक्
आलोच्य विवेचितम्। अस्मिन् किंचित् स्खलितं चेत् तेनच यदि
प्रतिपादितार्थोऽपसिध्दांतभूतो भवेत् तर्हि तत् ग्रंथाधारेण प्रकाशनीयम्।
अथवा प्रबंधवाचनेनाक्षेपाश्चान्ये समुत्पद्यमानाः स्युस्तर्हि तेऽपि
प्रकाशतां नेयाः। तान् निरसितुमेकपादेन स्थितोऽस्मि।

"मंदः कवियशःप्रार्थी गमिष्याम्युपहास्यताम्॥" तथापि

स्वमतिपरिणामावधि मायुर्वेदं प्रशंसता मयाऽऽयुर्वेदविजयिका आदरबुद्धिरेव व्यज्यते। कायवाङ्मनोभिरायुर्वेदोपबृंहणार्थं अहर्निशं घटमानानां विद्वत्पुंगवानां पादरेणुरहम्

“× × × ×”

## ॥ श्रीशंकरप्रसङ्ग ॥

### ॥ उपोद्घातः ॥

इह खलु धर्मोऽर्थः कामो मोक्ष इति चत्वारः पुरुषार्थाः पुंसां साधयितव्या भवंति। अनामयत्वमन्तरेण दुःसाध्या हि पुरुषार्थप्राप्तिस्तदुक्तं "धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमं॥ रोगास्तस्यापहर्तारश्आयुषो जीवितस्य च॥" तस्मादात्मन इहामुष्मिंश्च लोके हितं समनुपश्यताऽनुपहतबुद्धिपौरुषेण पुरुषेण प्राणपरिरक्षणे प्रयतितव्यम्। तदेव तावत्पूर्वतरमापद्यते, कस्मात्? प्राणपरित्यागे हि सर्वत्यागस्तस्मात् प्राणानुपालने प्रयतितव्यम्। प्राणानुपालनमारोग्यं चैकार्थवाचिनौ शब्दौ। सततमारोग्यानुवृत्तौ स्वस्थवृत्तमायुर्वेदे समुपदिष्टम्। धर्मशास्त्रे च स्वस्थवृत्तमाचार इति शब्देनाभिगद्यते। स्वस्थवृत्ते प्रमाद्यन्तः प्रज्ञापराधादिहेतुवशात् आतुर्यं प्राप्नुवन्ति। तस्मादातुराणां विकारप्रशमने स्वस्थानां संतानेन स्वास्थ्यानुवृत्तौ च नान्यदायुर्वेदशास्त्रात्साधनम्। स्वास्थ्यस्य परिरक्षणं व्याधितानां विकारप्रशमश्चायुर्वेदस्य प्रयोजनम्। तेन च सिध्यति सप्रयोजनमायुर्वेदशास्त्रमिति। यश्चायमायुर्वेदः परः सहस्रेभ्यो वत्सरेभ्यो भारतीयान्दीर्घायुषा योजयति स्म। यथोक्तं चरके "परं परापरिगतमायुर्वेदं लोकहितार्थं तत्र तत्र

समेत्य तपोदीर्घेण चक्षुषा लोकवृत्तिं निरीक्ष्य निर्लोभमोहमानाहंकाराः प्रीत्युपतापरहिता ऋषयः सर्वत्र प्रसरार्थं विविधतंत्राणि प्रणीयायुर्वेदं बृंहयन्तिस्म।

"स्वस्थवृत्तं यथोद्दिष्टं यः सम्यगुपतिष्ठति॥
स समाः शतमव्याधिरायुषा न वियुज्यते॥"

अस्मिन् शास्त्रे कदाचिदपि केषांचिदपि संशयो मा भूदिति हेतोः समवेतायां परिषदि प्राप्तान् प्राप्तान् संशयान् विचारपूर्वं सर्वेषामैकमत्येन निरस्यैतदायुर्वेदशास्त्रं सर्वैः प्रमाणैरसंदिग्धतां युक्तिगाढतां चानैषुर्महर्षयः। अष्टौ विभागा आयुर्वेदस्य तन्त्राङ्गशब्देनोच्यन्ते। तद्यथा शल्यं, शालाक्यं, कायचिकित्सा, भूतविद्या, कौमारभृत्यं, अगदतंत्रं, रसायनतंत्रं, वाजीकरणतंत्रं चेति। शल्यं नाम विविधतृणकाष्ठपाषाणपांसुलोहलोष्ठास्थिवालनखपूयास्रावदुष्टव्रणान्तर्गर्भशल्योद्धरणार्थं यंत्रशस्त्रक्षाराग्निप्रणिधानव्रणविनिश्चयार्थं च। औपधेनवसंहिता, औरभ्रसंहिता, वृद्धसुश्रुतसंहिता, पौष्कलावतसंहिता, वैतरणसंहिता, भालुकितंत्र, भोजसंहिता, करवीरतंत्र, गोपुररक्षिततंत्र, कपिलतंत्र, गौतमतंत्र, इत्येतानि तंत्राणि शल्यतंत्रमधिकृत्य प्रणीतानि।

शालाक्यं नाम — ऊर्ध्वजत्रुगतानां रोगाणां श्रवणनयनवदनघ्राणादि-
संश्रितानां व्याधीनां उपशमनार्थं शलाकायंत्रप्रणिधानार्थं च।
विदेहतंत्रं, निमितंत्रं, कांकायनतंत्रं, करालतंत्रं, गार्ग्यतंत्रं, गालव
तंत्रं, सात्यकितंत्रं, शौनकतंत्रं, चक्षुष्यतंत्रं, कृष्णात्रेयतंत्रं,
इत्येतानि तंत्राणि शालाक्यतंत्रमधिकृत्य महर्षिभिः प्रणीतानि।
कायचिकित्सा नाम- सर्वांग संश्रितानां व्याधीनां ज्वर ~~पित्त~~ रक्त-
पित्त शोषोन्मादापस्मार कुष्ठमेहातिसारादीनामुप~~[illegible]~~शमनार्थम्।
अग्निवेशसंहिता, भेडसंहिता, जतूकर्णसंहिता, पराशरसंहिता,
क्षारपाणिसंहिता, हारीत संहिता, खरनाद संहिता, विश्वामित्र-
संहिता, अत्रिसंहिता, इत्येतानि तंत्राणि कायचिकित्सामधि-
कृत्य महर्षिभिः प्रणीतानि। भूतविद्या नाम- देवासुरगंधर्वयक्ष-
रक्षः पितृपिशाच नागग्रहाद्युपसृष्टचेतसां शांतिकर्म बलिहरणादि-
ग्रहोपशमनार्थम्। कौमारभृत्यं नाम कुमारभरण धात्रीक्षीरदोष
संशोधनार्थं दुष्टस्तन्य ग्रहसमुत्थानांच व्याधीनामुपशमनार्थम्।
जीवतंत्रं, पार्वतकतंत्रं, बंधकतंत्रं, हिरण्याक्ष तंत्रं, इत्यानि तंत्राणि
कौमारतंत्रमधिकृत्य महर्षिभिः प्रणीतानि। अगदतंत्रं नाम —
सर्पकीटलूतादष्ट विषव्यंजनार्थं विविधविष संयोगोपशमन-
नार्थंच। काश्यप संहिता, अलंबायन संहिता, उशनःसंहिता,

सनकसंहिता, लाट्यायनसंहिता, इत्येतानि तंत्राणि अगदतंत्र-
मधिकृत्य महर्षिभिः प्रणीतानि। रसायनतंत्रं नाम वयस्थापन
मायुर्मेधा बलकरं रोगोपहरण समर्थंच। पातंजलितंत्रं, व्याडितंत्रं,
वसिष्ठतंत्रं, माण्डव्यतंत्रं, नागार्जुनतंत्रं, इत्येतानि तंत्राणि रसा-
यनतंत्रमधिकृत्य प्रणीतानि महर्षिभिः। वाजीकरणतंत्रं नाम-अल्प-
दुष्टक्षीण विशुष्क रेतसामाप्यायन प्रसादोपचय जननानिमित्तं
प्रहर्षजननार्थंच। प्राणिनां पुनर्मूलमाहारो बलवर्णौजसांच। स
षड्रसेष्वायत्तः। रसाः पुनर्द्रव्याश्रयाः। द्रव्याणि पुनरोषधयस्तास्तु
द्विविधाः स्थावरा जंगमाश्च। स्थावराश्चतुर्विधा वनस्पतयो वृक्षा
वीरुध औषधयश्च। तत्र स्थावरेभ्यः "मूलत्वक्सार निर्यास नाल
स्वरस पल्लवाः॥ क्षाराः क्षीरं फलं पुष्पं भस्म तैलानि कंटकाः॥
पत्राणि शुंगाः कंदाश्च प्ररोहाश्चौद्भिदो गुणः॥" अयं चौद्भिद्गणः
संतर्पणातर्पणात्मकै द्विविधेश्चोपक्रमे प्रयोजनवान्। यथा रोगाः
~~प्राणिनो~~ प्राणिनः स्पृशंति तथैव स्थावराश्चौषधीः स्पृशंति।
नीरुजामेवौषधीनां मूलपत्रकंदादयो द्विविधोपक्रमे प्रयुक्ता
हिताय भवंति। न तथा सरुजामौषधीनां मूलकंदादयो
धान्यादीनिच। तस्मात् ~~प्रवाहेतो~~: पुण्यशीलै महात्मभिः

प्रजाहितहेतोः काश्च कीदृशाश्चौषधयो हिततमाः काश्चाहित-
तमाः काश्च नीरुजः काश्च सरुजः सरुजांच को विकारप्रशमः
एतत्सर्वं विचिन्त्य वृक्षायुर्वेदः प्रणीतः। तस्मिन्वृक्षायुर्वेदे
औषधीनां युक्तायुक्तत्वमारोग्यमनारोग्यंच सर्वमेतत् त्रिदोष-
विज्ञानेनैव प्रतिपादितम्। मनुष्यसंसर्गिणां प्राणिनांचारोग्या-
नारोग्यज्ञानार्थं तेषां विकारप्रशमनार्थंच हस्त्यायुर्वेदादिग्रंथेषु
त्रिदोषमाधीकृत्य ज्ञानं प्रतिपादितम्। ज्योतिःशास्त्रेच शनिसूर्य-
सोमादयो वातपित्तकफद्वारेणैव भाविनो विकारान्सूचयन्ति।
ब्रह्माण्डपुराणे ब्रह्मवैवर्तपुराणे, अग्नि पु. विष्णु पु. गरुड पु.
सौर पु. भगवत्पूज्यपादादिप्रणीतेषु भाष्यादिग्रंथेषु बादरायण-
प्रणीते सर्वज्ञानाकरे श्रीमन्महाभारतेचैषु निर्दिष्टेषु ग्रंथेषु प्रसं-
गवशात् निदर्शनत्वेन त्रयाणां दोषाणामुपन्यासो दृश्यते। एव-
मनुविचार्यमाणे सर्वग्रंथगतानां वाक्यानां समन्वयेऽवगम्यमाने
सतीदं अत्र सिध्यति संमतमिदं त्रिदोषतत्वम्। त्रिकालज्ञै-
र्महर्षिभिरन्तर्मुखदृष्टिभिर्विमृश्य प्रतिपादितेऽर्थे विचिकित्सा
न युक्ता। एवं स्थितेऽपि आयुर्वेदस्यैकमपि तंत्रमनभ्यस्य
परप्रज्ञानुपातिन आयुर्वेदमाक्षिपन्ति तदसांप्रतम्।

यथायं सर्वाङ्गपरिपूर्णः एवमेव सर्वा विद्याः सर्वाः कलाश्चाभूवन्। तेन चायं भारतो देशः सर्वोत्कर्षस्यातिभूमिं गतो यच्च पौर्वात्याः पाश्चात्याश्च सर्वे सर्वोत्कर्षातिशायित्वात् सुवर्णभूमिरमरोद्यान- मित्यादि शब्दैः संबोधयन्तिस्म। "सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः॥ संयोगा विप्रयोगान्ताः" इत्यादि वचनानुसारेण यथोपवर्णितो भारतः इमां संप्रत्यनुभूयमानां कष्टां दशामापन्नः। कालएवात्र प्रष्टव्यः कालवशात् भूयो भूयः परचक्रनिपीडितेऽस्मिन् भारते यथाचात्माकं स्वत्वं स्वातंत्र्यं सर्वज्ञानकरा ग्रंथसंदोहा वैभवंच सर्वमेतत् केवलं स्मृतिशेषमभूत्। सैवावस्थाऽद्युवर्तते। पूर्वतरस्मिन् काले सर्वोत्कर्षस्यातिभूमिं गता वयं भारतीया ज्ञानार्थं वृध्यर्थं दासभावार्थंच तानुपतिष्ठामो ~~[illegible]~~ येचास्मान् सर्वात्मना ज्ञानार्थं प्राणयात्रार्थं चोपतिष्ठन्ति। जितजेतृवशात् "यद्वृत्ताः सन्ति राजानस्तद्वृत्ताः सन्ति हि प्रजाः" इत्युक्तिमनुसरन्तो भारतीया दृश्यन्ते। तथ्यथा पाश्चात्यानां हसितगमनवाहनवेषभाषा- ऽऽचाराहार विहारादीन् तथा ज्ञानार्थं पाश्चात्यप्रणीतान् ग्रंथानामपि भौतिकज्ञानपरान् आद्रियमाणा यद्यदिदमात्मीयं तत्तत्प्रायो दोषेणावगच्छन्ति। तथैवास्माकमायुर्वेदाख्यमारोग्य- शास्त्रमपि। . . . .

इदमत्र तात्पर्यम् - दुर्नियतेः समुल्लासात् सर्वथा परप्रज्ञानुपातिनो भूत्वाऽनंधा अप्यंधा इव सवाचोऽपि मूका इवाबधिरा अपि बधिरा इवापंगवोऽपि पंगव इव देशिताः पशव इव संवृत्ताः स्मः। अलमप्रस्तुतानुप्रसक्त्या, प्रकृतमनुसरामः। परप्रणीतेष्वारोग्यशास्त्रेषु कृतबहुपरिश्रमाः प्रत्यक्षैकज्ञानपराः पूर्वैः पूर्वतरैश्च भारतीयैरनासादितं ज्ञानमस्माभिरासादितमिति भृशं दृप्यन्त आयुर्वेदमपवदन्ति। यस्त्वायुर्वेदो भारतीयान्, सम्यगासेव्यमानो नश्चिराय दीर्घायुषा योजयति स्म स्वास्थ्यसंतानेनामितबलेन च। तमायुर्वेदं यथायोगमनुपयुंजाना दीर्घायुषो बहुतः स्वास्थ्याच्च प्रत्यहं ह्रसामः। आयुर्वेदमुपयुञ्जानानां नोपयुंजानानां च सत्यपि महत्यन्तरे प्रज्ञापराधात् यद्धितं तदहितं यच्चाहितं तद्धितमिति मन्वाना लब्धपदवीकाः " अभिजातोऽस्मि सिद्धोऽस्मि नास्मि केवलमानुषः" इति पण्डितंमन्याः केचित् आयुर्वेदमधिकृत्य यत्किंचित्प्रलपन्ति। प्राचां शास्त्रावचारणेन पुण्यं नासीदित्येके, त्रिदोषविज्ञानं नाम वृथाडंबरभूतोऽयं विषयः कल्पनाप्रसवः प्राचीन आयुर्वेदे। यतो विशस्यमाने देहे रक्तरुधिरशिरा कंडराधमन्यादिकानि दृष्टिविषया भवन्ति। न तथा दोषा नाम।

यद्य दास्तित्वेन प्रतिभाति न तत्र केषांचिदपि विसंवादः। 'अग्नि-र्हिमस्य भेषजं,, 'सलिलेन पिपासोपशमनं, 'तमसि प्रदीपः शरणम्, इत्याद्यर्थे न केषांचिदपि वैमत्यं दृश्यते। यदि च नाम त्रिदोषतत्वं एवमेव स्यात्तर्हि नात्र विद्वांसः संशयीरन्। आयुर्वेदो नाम गीर्वाण-भाषायां संदर्भितो यथा प्रत्यक्षानुभव सिद्धौषधि प्रयोगविज्ञानो, नान्यत्तथाविधं किंचिदपि। यदिच्चेदानींतने काले विविधानि स्वस्व-हितार्थं विकारप्रशमनार्थं प्रकाशतां गतानि आरोग्यशास्त्राणि कानिचित् व्याधिविपरीतानि कानिचित् हेतुविपरीतानि कानिचित् व्याधिविपरीतार्थकारीणि कानिचित् हेतु विपरीतार्थकारीणि कानि-चिच्चोभयार्थप्रतिपादकानि। तेषु नैकमपि त्रिदोषमाधिकृत्य प्रवृत्तं। त्रिदोषविज्ञानाभावात् स्वस्वकार्याभिनिर्वृत्तौ न तेषां प्रतिहता गतिः। तथैवायुर्वेदोऽपि स्यादिति केचिदाक्षिपन्ति। प्रथमं तावत् इदमत्र विचार्यं नहि वर्तमानेन कालेन भूतभविष्यत्कालीनं वृत्तं कैश्चिदप्य-नुमातुं युक्तम् विशेषतश्च परतंत्रबुद्धिवृत्तिभिः। तस्मात् पूर्वेषां पूर्वतरेषांच्च बलं, ज्ञानं, आरोग्यमनारोग्यंच साम्प्रतिकेनास्माकं ज्ञानेन तुलयितुं न युक्तम्। पूर्वेच्च महर्षयः तपःप्रभावात् तपो-दीर्घेण चक्षुषा सर्वावजयेनच्च भूतभविष्यन्तौ कालावपि वर्तमानतां नेतुं शक्ताः। . . . . . . . . . . . . . . . .

आध्यात्मिकाधिदैविकाधिभौतिकज्ञानपरास्त्रिकालज्ञा महर्षयः क्व
प्रत्यक्षैकज्ञानसाधना बहिर्मुखाः केवलाधिभौतिकज्ञानपरा अस्मदादयः क्व।
संप्रति प्रकाशतां गतेषु नवनवेष्वारोग्यशास्त्रेषु पाश्चात्यैर्विपश्चिद्भि-
स्त्रिदोषविज्ञानं नोपन्यस्तमित्येव कारणात्संप्रदायपूर्वमायुर्वेदमनीषीत्य
त्रिदोषविज्ञानं वृथा प्रक्षिप्तमिति वक्तुमसांप्रतम्। अन्यच्च प्रसिध्यात्
पुरावृत्ताद्देवमवगम्यते 'आयुर्वेद एव सर्वेषां प्रसिद्धानां नवनवाना-
मारोग्यशास्त्राणामुपज्ञतां गत इति। भारतीयाः पाश्चात्याश्च चरकादीन्
ग्रंथानधीयाना विस्मितचेतसो विद्वांसः साहिरव्याप्यं सबहुमानमा-
युर्वेदं प्रशंसन्ति। ग्रंथसमाप्तौ च चरके प्रतिज्ञातं " यदिहास्ति तदन्यत्र
यन्नेहास्ति न तत् क्वचित्॥" नाद्यावत् त्रिदोषविज्ञानमुखेन निश्चित्य
प्रयुक्तेषु भेषजेषु प्रयोगेषु नैकमात्रमपि भेषजमेकमात्रोऽपि च
प्रयोगः पाश्चात्यैर्भारतीयैश्च प्रसभा तैस्तैः प्रयोगैश्चानुभवनिकषे
परीक्ष्य अपार्थकमिदं भेषजं विरुद्धश्चायं प्रयोगोऽस्मिन् विकारे इति
न प्रदर्शितम्। तद्यथा गोमूत्रतक्रसुवर्णपारदादीनां रसगुणभेषज-
प्रयोगानजानन्तोऽपि गोमूत्रतक्रसुवर्णादीन् संप्रत्युपयुञ्जानाः पूर्वेषां
प्रज्ञाकौशलं मानयन्ति। चंद्रबिंबस्य पाश्चात्ये भागे शशकाः नृत्यन्ती-
-ति केनचिदुक्ते न तत्र प्रतिवक्तव्यम्। शशकाः न नृत्यन्तीति।
चंद्रबिंबस्य पाश्चात्ये भागे किमस्ति तन्न ज्ञायते इति वक्तुमेव
सांप्रतम्। अत आत्मनः प्रज्ञादौर्बल्यात् दुर्ज्ञेयत्वाच्च दोषाणां

"वंध्यापुत्रः समायाति खपुष्पकृतशेखरः॥ शशशृंगधनुर्धरः" इत्यु-
क्तिवत् त्रिदोषविज्ञानमिति न मन्तव्यम्। समागच्छेऽन्यापि सुकालो
येन येऽद्य दुर्ज्ञेया भावास्ते सुज्ञेयतां गच्छेयुः। उषां हि गौरवबुद्ध्या
महर्षयो देवतात्वेनास्तुवन्। उषामुद्दिश्योपवर्णितं सूक्तं पठन्तः
पाश्चात्यादयो वैदिकज्ञानबुभुत्सवो मिथ्योपवर्णनमिदमुषायाः; उषा
नाम नास्तीत्यमन्यन्त। तेऽद्याधुनोषोवर्णनं सत्यत्वेन मानयन्ति।
कथमिदं ज्ञानं प्राचामासीदिति च विस्मयन्ते। एवं सौरसूक्तादिष्वभि-
ष्टुतस्य भगवतः सहस्ररश्मेः किरणमाहिमानं प्राक् दुर्ज्ञेयभूतं संप्रति
तैस्तैः प्रयोगविशेषैर्वेदिषुः। अलमतिप्रसक्त्या। इदमत्र तात्पर्यं
नहि स्वास्थ्यादृते पुरुषार्थप्राप्तिर्भवति। अनासादितपुरुषार्थाः पुरुषाः
पशुभिः समानाः तदुक्तं "धर्मार्थकामहीना ये ते नराः पशुवृत्तयः॥"
पुरुषार्थप्राप्तेश्च प्रथमं साधनं देहस्वास्थ्यम्। देहस्वास्थ्यानुपाल-
नार्थमायुर्वेदे ~~[illegible]~~ दृढादरः कर्तव्यः। स्वास्थ्यं माभूदिति
केषांचिदपि मतम्। अदीर्घदर्शित्वात् असन्तो दोषानुभाव्य
आयुर्वेदविषयेऽज्ञानानां बुद्धिभेदं जनयित्वा आदरबुद्धिं विलोपयेत्।
"स तु तत्र विशेषदुर्लभः सदुपन्यस्यति कृत्यवर्त्म यः॥" इति
कविश्रेष्ठस्य भारवेर्मतमनुसृत्य वा विस्तरे चापलं कृतम्

॥संपूर्णोऽयमुपोद्घातः॥

———०%०=०=०%०———

॥ श्रीशंकरप्रसन्न ॥

परीक्षकाणां सुखावबोधार्थं प्रथमं समासतो विमतविमर्शन-
पूर्वं प्रणीतप्रबंधस्य प्रस्तावः प्रस्तूयते ॥

प्रणीतेऽस्मिन् प्रबंधे दोषानामद्रव्यमिति सिध्दांतश्चरक-
सुश्रुताष्टांगसंग्रहादिग्रंथानामेकवाक्यत्वात् स्थापितः। नायमनै-
कान्तिकः सिध्दान्तः। तच्च विमतानां विमर्शने सुस्पष्टं भवेत्।
केचिच्चामूर्ता वै दोषा इत्यभ्युपगच्छन्ति तन्निर्युक्तम्। अमूर्तानां
निरवयवत्वात् परिच्छेदाभावः। दोषास्तु परिच्छिन्नाः। अमूर्तेषु द्रव्येषु
क्रियावत्वं नास्ति। दोषास्तु क्रियावन्तः " यत्राश्रिताः कर्मगुणाः
कारणं समवायि तत् ॥ " इति यद्द्रव्यलक्षणं उक्तं चरके तदमूर्तेषु
नोपपद्यते तस्मादमूर्तत्वेन दोषान् विशेषयितुं न युक्तम्। यच्चापरे
प्रत्यवतिष्ठन्ते गुणरूपा वै दोषा इति एतदप्ययथावद्भासते। गुण-
लक्षणं चरके एवमुक्तम् "निश्चेष्टः कारणं गुणः" अत्र हि गुणस्तु
निश्चेष्टः (स्वयं क्रियाशून्यः) इत्युच्यते दोषास्तु सक्रिया इत्युक्तम्।
अन्यच्च " गुणानामाश्रयो द्रव्यं, न च ते द्रव्यमन्तरेणावतिष्ठन्ते।
द्रव्याणां गुणानां च समवायसंबंधेनावस्थानम्। न च द्रव्यात्
गुणा वियोजयितुं शक्यः। यथाऽग्नेर्दाहकत्वं, सवितुः प्रभा,
कार्पासस्य शुक्लत्वम् इत्यादि।" अन्यच्च त्रयो हि दोषाः ----

इत्यायुर्वेदे उपदिष्टम्। सर्वतंत्रमान्योऽयं सिद्धान्तः। गुणरूपा हि दोषा इत्युक्ते दोषाणां विंशतित्वमापद्यते "गुरुमंदहिमस्निग्ध- त्यादयो विंशतिर्गुणाः समुपदिष्टाः। तेनच विंशति दोषा इति प्राप्तं तच्चायुर्वेदे नोपदिष्टम्। तस्मात् गुणरूपत्वेन दोषा लक्षयितुं न युक्ताः। स्थूलाश्च दोषा इति मतमपि न युज्यते। सूक्ष्मविपरीताः स्थूलाः। दोषाणां तु सूक्ष्मसूक्ष्मतरस्रोतोमार्गगमनोपवर्णनेन सूक्ष्मत्वमुपलभ्यते। स्थूलानां सूक्ष्मतरस्रोतः प्रवेशासंभवात्। स्थूला वै दोषा इति मतमपि न युज्यते। (समंजसं प्रतिभाति) परमाणु- रूपा इति यदुच्यते तत्रैव वक्तव्यम्। यानि कानिचिदपि द्रव्याणि नाम तानि परिमाणैरवतिष्ठन्ते। इमानि तु तानि परिमाणानि अणु, महत्, दीर्घं ह्रस्वं चेति। अणुत्वं, महत्वं, दीर्घत्वं, ह्रस्वत्व- मिति द्रव्यस्यावस्थानविशेषाः। तथापि न ते द्रव्यत्वं व्यभि- चरन्ति। तस्मात्परमाणुरूपा इत्यभ्युपगमात् दोषा नाम द्रव्य- मिति विशेषत उपपन्नं दृश्यते, परमाणूनां द्रव्येऽन्तर्भावात्। पांचभौतिका इति मतस्य विमर्शनं प्रकृतिविज्ञानप्रकरणे दोषाणां त्रिवृत्करणत्वप्रतिपादनेन पंचितम्। अत्र किं युक्तं किमयुक्तमिति विचिन्त्यमाने दोषा हि नाम द्रव्यविशेषः .....

चरकादिग्रंथप्रतिपादितः सिध्दांतो युक्तस्चप इति प्रतिभाति। दोषाणामद्रव्यमित्यभ्युपगम्यमाने सति प्रायो वैमत्येन निर्दिष्टानि मतानि संवदेयुस्तत्कथं तत्संक्षिप्य प्रदर्श्यते। 'मूर्ते हि द्रव्ये सति गुणाः संति परमाणवः सन्ति अतीन्द्रियसूक्ष्मत्वं संघातावस्थानविशेषेण स्थूलत्वं पांचभौतिकत्वं सूक्ष्मत्वात् कार्यानुमेयत्वं अनुमानग्राह्यत्वंच।

——•×•⊃•⊃•×•——

(प्रथमं प्रकरणम्) ॥ श्रीशंकरप्रसन्न ॥ (आकृतिविज्ञानं)

सर्वसंवित्प्रदः शर्वः शरणः शरणैषिणाम् ॥
प्रज्ञां मे विशदीकुर्यात् तमसावृतचेतसः ॥१॥
यस्य सर्वंकषा बुद्धिर्वेदशास्त्रार्थनिर्णये ।
निवर्त्य मामसन्मार्गाद्यो बोधयदहर्निशम् ॥२॥
वंशः समुन्नतिं नीतो येन स्वगुणकर्मभिः ।
अनन्यया धिया ध्यातः स आर्यो मां कृतार्थयेत् ॥३॥
पूर्वाचार्यैः सुनिर्णीतंस्तपोदिव्येन चक्षुषा ।
एतन्निदोषसर्वस्वं यथाबुद्धि विविच्यते ॥४॥

ब्रह्मणः प्रजापत्यश्वीन्द्रादिपरंपरया पारंगतोऽयमायुर्वेदस्तपोदिव्येन चक्षुषा स्वतंत्रप्रज्ञैर्महर्षिभिः समुपबृंहितो विविधतंत्रात्मकः शारीरमानसानां विकाराणामनुत्पत्त्यै उत्पन्नानां च प्रशमाय च तावच्छरीरमधिकृत्य प्रवृत्तः । दोषधातुमलमूलं हि शरीरम्, यथावदस्य संप्रदायशुद्धेन ज्ञानेन जातानां जायमानानां जनिष्यमाणानां च विकाराणां सामान्यतो विशेषतश्च ज्ञानं तत्प्रतीकारश्च करतलामलकवत्सुज्ञेयो भवति।

सर्वशरीरव्यापित्वात् दोषा हि प्रथमं निर्दिष्टास्ततो धातवोऽनंतरं मलाश्च। अग्रिमं प्रकरणं सुखावबोधार्थं शिष्याचार्यसंवादेन विविच्यते। [कश्चिदाचार्यात् गृहीतायुर्वेदविद्यः कंचित् कालं ततइतो भ्रमन् गुरुकुलमेत्य विश्रांतः कदाचित् सुखमासीनमाचार्यमन्वयुङ्क्त भगवन्, आयुर्वेदस्य प्रकाशनाय यत्र कुत्रापि संचरता मया प्रसंगवशादायुर्वेदमधिकृत्य पृष्टाः संशयाः श्रुताः। तान् परिच्छेत्तु मक्षमोऽहं भवतः पादमूलमागतोऽस्मि तत्सर्वानपि तान् एकैकशः संच्छिन्नानु ग्राह्योऽहं भवता।

आचार्यः - वत्स, ब्रूहि, सर्वान् ते संशयान् निःशेषयामि।

शिष्यः - सर्वशरीरव्यापित्वात् दोषाः प्रधानमिति यदुक्तं तत्र बहवः संदिहाना दृश्यन्ते।

आचार्यः - सर्वप्रमाणसिद्धेऽर्थे कुतः संशयः। शास्त्रस्य यथावदनभिज्ञाः केचनात्मनो बुद्धिदोषेण शास्त्रं दूषयंति।

शिष्यः - यद्येवं तथाप्यल्पश्रुतधियामस्मादृशां मादृशैरुद्भासिताः संशया दुरुच्छेद्यतमा भवंति। त्रिदोषज्ञाने सुसन्ना एवं यत्र तत्र श्रुवन्ति। विशस्यमाने देहे यथा रुधिरादयो यथोक्तरूपा दृश्यन्ते, न तथा दोषा नाम दृशो विषया भवन्ति। तस्मान्मन्यामहे —

मनःपरिकल्पितं त्रिदोषविज्ञानं प्रक्षिप्तमायुर्वेदे, इति। सर्वेषां
हि ज्ञानसाधनत्वेन शास्त्रप्रसिद्धानां प्रत्यक्षानुमानोपमानार्थापत्ति-
शब्दसंज्ञितानां प्रमाणानां प्रत्यक्षं हि श्रेष्ठं प्रत्यक्षपूर्वकत्वात्सर्वेषां।
अतः प्रत्यक्षेण यदुपलभ्यते तत्सत्यमन्यदसत्यमेतस्मादेव कारणात्
(प्रत्यक्षाविषयत्वात्) त्रिदोषविज्ञानं प्रक्षिप्तमिति मन्यन्ते। आचार्य-
एवैनं संशयमुच्छेत्तुमर्हति।

आचार्यः— यथावदुच्यमानं सावधानं शृणुष्व। यत्र प्रत्यक्षेणे-
तराणि प्रमाणानि विरुध्यन्ते तत्र तानि वंध्यानि। प्रत्यक्षेण हि
ज्ञातमर्थं नान्यानि प्रमाणानि बाधितुं शक्नुवन्ति। प्रत्यक्षेणो-
ष्णत्वेन ज्ञायमानेऽग्नौ शीतोऽग्निरिति प्रतिपादयत्प्रमाणजातं वंध्य-
मेव। यदुच्यते 'यत्प्रत्यक्षेण न ज्ञायते तदसत्यमिति, अनुचितं तत्र
वक्तव्यम्। नियमाभावात्। नन्वेवं नियन्तुं शक्यते यत्र प्रत्यक्षं
न क्रमते तत्रेतराणि प्रमाणानि कुण्ठीभवन्ति, इति। सन्ति च बहवो
भावा अगम्याः प्रत्यक्षेण तथापि तेऽन्यैः प्रमाणैर्ज्ञायन्ते। अत-
एव न प्रत्यक्षानिवृत्तिमात्राद्वस्त्वभावो भवति। अतिप्रसंगात्।
तथाहि गृहाद्विनिर्गतो गृहजनमपश्यंस्तदभावं विनिश्चिनुयात्—

नत्वेवं, अपितु योग्यप्रत्यक्षनिवृत्तेरयमभावं विनिश्चिनोति; न तन्निवृत्तिमात्रात्तदभावनिश्चयो युक्तः प्रामाणिकानाम्। प्रत्यक्षं नामात्मेन्द्रियमनोऽर्थानां सन्निकर्षजन्यं ज्ञानम्। पंच हि ज्ञानसाधनानींद्रियाणि, तेषु दृगित्येकदेशः। केवलया दृशा जायमानं ज्ञानं सत्यमन्यत्कल्पनाप्रपंच, इति यदुद्घुष्यते तत्तु भ्रांतिमूलं। न स्वल्पज्ञानसाधनेन दृङ्मात्रेण व्यवहारः सिध्यति। दृष्टमात्रः सैंधवखंडः शर्कराखंडो वा रसनामंतरेण न विशेषयितुं शक्यः "इयं शर्करा, इदं सैंधवं, इति। न जन्मांधा अपि दृष्ट्यभावात् घटपटादिवस्तुजातस्याभावं कल्पयन्ति। तथान्यदपि ममेयं माता, ममायं पिता, इति प्रत्ययः शब्दप्रमाणादेव भवति। जातमात्रस्य न ज्ञानोत्पत्तिः पितृत्वस्य मातृत्वस्य च। घनांधकारे वाशतां पशूनां श्रूयमाणेन शब्दविशेषेण श्वायं, कुक्कुटोऽयं, गर्दभोऽयं वेति ज्ञायते। रवेरुदयमस्तमयं च* नित्यं पश्यन्तोऽपि विपश्चितो भ्रांतिमूलावुदयास्तमयाविति मन्यन्ते। सत्यामपि दृष्टौ न विषयव्यक्तिर्मर्त्यानाम्। चक्षूरूपसंनिकर्षो हि पशूनां ज्ञानकारणम्। योगिनां तु मनःसंयोगमात्रेण ज्ञानं भवति।-

---

* सविता स्थिरः, भूमिः आत्मनः सवितुश्च परितो गतिद्वयेन परिभ्रमति। भूमेः परिभ्रमणात् उदितश्च सविता, अस्तमितश्च सवितेति भ्रांतिर्जायते। अन्यच्च नौगतानां जनानां तीरस्था वृक्षा चलंतीति भ्रांतिर्जायते। अन्यच्च "चक्षुषा भ्राम्यमाणेन दृश्यते चलतीव भूः"॥

तस्मादेतन्निष्पद्यते "न हि सर्वेषां भावानां भावविशेषाणां
देहवाक्चेतसां भूयमानानां व्यापाराणां च यथावज्ज्ञाने प्रत्यक्षमेव
पर्याप्तमिति, का कथा पुनस्तत्रैकस्य दर्शने द्वयस्य", तस्मादेतत्
सिद्धं 'दोषा न दृश्यो विषया भवन्तीत्येव कारणात्तेषु कल्पनामयत्वं
न युक्तमध्यारोपयितुम्। सन्ति च सर्वेषां प्रमाणानां विषया अपि
भिन्नाभिन्नाः; भिन्नो हि प्रत्यक्षस्य विषयो भिन्नश्चानुमानस्य भिन्न-
भिन्नाश्च तथैव शब्दादीनामपि। तस्मात्प्रत्यक्षैकशरणानां
नेदं युक्तिमद्वचनं प्रतिभाति यत्प्रत्यक्षेण प्रमाणेन नावगम्यते
तदेव सत्यमन्यन्मिथ्येति। अन्यच्च सागरवेलायां तिष्ठन्तः
कैवर्ता दूरादेव सलिलसंचलनविशेषेण मीनकुलागमं विदन्ति
कलादाश्च रूपमात्रेण काञ्चनस्य वरावरत्वं जानन्ति। मीनकुलप्राप्ति-
~~[illegible]~~प्राप्तिश्च वरावरत्वं च सुवर्णस्य नीतिशास्त्रज्ञैः पण्डित-
म्मन्यैर्युद्धशास्त्रप्रवीणैश्च नावगम्यते इत्येव कारणात् ~~कैवर्त~~
कैवर्तकलादानां ज्ञानं न मिथ्या भवितुमर्हति। अत एवोक्तम्
"अभ्यासात्प्राप्यते दृष्टिः" इति। अक्षरग्रामस्याकारज्ञानमात्रेण
विनालिखनाभ्यासात् विद्वांसोऽपि नाक्षररचनत्वं प्राप्नुवन्ति।

तथैवान्यशास्त्राभ्यासेन क्षपितायुषां संप्रदायेनानधीतायुर्वे-
दानां वाग्विसर्गादिदोषमिथ्यात्वसिद्धौ प्रमाणं न भवेत्।
सति च प्रमाणान्तरविरोधे दोषत्रयं कल्पनामात्रमिति वचनं
युक्तरूपं स्यात्। दोषत्रयमिथ्यात्वं प्रतिपादयन्तो न प्रमाणान्तरं
दर्शयन्ति किन्तु दृशा न ज्ञायते इत्येव कारणात् दोषत्रयं कल्पना-
मूलमिति वदन्ति। सर्वाणि खल्विमानि प्रमाणानि स्वस्वविषये
तुल्यबलानि। निश्चितफलवद्विज्ञानोत्पादकं हि प्रमाणम्। यच्च
निश्चितफलवद्विज्ञानोत्पादकं न स्यान्न तत्प्रमाणम्। दोषाणां केवलं
दर्शनाविषयमात्रत्वादेव नेतरेषां प्रमाणानां निश्चितफलवद्वि-
ज्ञानोत्पादकत्वमपोह्यते। एवं विचार्यमाणे इदमत्र सिध्यति
प्रत्यक्षेण प्रमाणेन (दृष्टिमात्रेण) दोषत्रयं न ज्ञायते तस्मात्
प्रदिष्टमिदमिति मन्तुं न युज्यते।

शिष्यः- प्रत्यक्षपूर्वाणि हि सर्वाणि प्रमाणानि, इति श्रूयते
तेन दोषत्रयस्यापि यथापूर्वं प्रत्यक्षविषयत्वं प्राप्तमेवन्यायतः।

आचार्यः- यदुक्तं प्रत्यक्षपूर्वकाणि प्रमाणानीति तत्तु पुरुष-
बुध्यपेक्षया (पुरुषबुद्धिप्रणीतेषु ग्रंथेषु तन्मन्तव्यम्) तस्मात्-

द्विविधं हि प्रत्यक्षं निगद्यते। इंद्रियप्रत्यक्षं आत्मप्रत्यक्षंच (इंद्रियप्रत्यक्षं=पुरुषप्रत्यक्षं)। सुखदुःखद्वेषादय आत्मप्रत्यक्षाः, शब्दस्पर्शादिजन्यं ज्ञानं, इंद्रियप्रत्यक्षम्। अल्पं हि प्रत्यक्षम् (प्रत्यक्षस्य विषयोऽल्पः) तदुक्तंच चरके

"अतिदूरात्सामीप्यात् इंद्रियघातात् मनोऽनवस्थानात्।
सौक्ष्म्याद्व्यवधानादभिभवात् समानाभिहाराच्च॥" प्रत्यक्षानुपलब्धिः। यैर्ज्ञायमानं ज्ञानं प्रत्यक्षमित्युच्यते तानींद्रियाणि त्वनुमानगम्यानि (इंद्रियाणांसत्त्वमसत्त्वंच कार्यानुमेयम्)। अनल्पविषयाण्यन्यानि प्रमाणानि। यावता दृक्-प्रत्ययेन दोषत्रयं कल्पनामूलमिति वदन्ति तावान् पूर्वेषामपि शास्त्रप्रवर्तयितां* विदुषां प्रत्यय आसीत्। एवं स्थितेऽपि दोषत्रय विज्ञानं मुत्याद्भूतमासीत्। अतिसंनिकर्षादनुपलब्धिर्यथा "लोचनस्यांजनमतिसंनिकर्षान्नोपलभ्यते"। अतिदूरादनुपलब्धिर्यथा "विहायुत्पतन्पतत्री सन्न्याति दूरान्नोपलभ्यते"। करणदौर्बल्याद्यथा "कामलाद्युपहतस्य चक्षुषः पटशौक्ल्याद्यप्रतिभानम्"। मनोऽनवस्थानाद्यथा "कांतामुखनिरीक्षणप्रहितमनसः पार्श्वगतानां वचनानवबोधः। समानाभिहाराद्यथा 'तोयदविमुक्ता उदबिंदवो जलाशये न दृश्यन्ते'। सौक्ष्म्याद्यथा त्रिचतुर्हस्तप्रमाणदेश-

---

*शास्त्रेण देहभवस्य यो विदन्त यत देहगतानां भावानां ज्ञानं आयते येन च ज्ञानेन दोषा[illegible] नामसंति इति वदंति। तावन्मात्रं, मां धातुमपि ज्ञानं नतुर्लभमासीत् तदा तेषामपि दृष्टा दोषदर्शनं नासीत्। तथापि ते दोषाणामभावं नैवाभन्यंत। अपितु सं तेन दोषा उत्पन्नाः अन्यन्त।

वर्तिनः कृमिविशेष-किरण्यादेरग्रहणम्। आवरणाद्यथा भित्त्यादि-
पिहितस्य घटादेरग्रहणम्। यद्यप्यनुमानं प्रत्यक्षपूर्वं तथापि
प्रत्यक्षादनुमानं बहुव्यापकं; तस्मात्तत् प्रत्यक्षाद्गरीयः। यत्र-
प्रत्यक्षं न क्रमते तत्रानुमानसिद्धिर्यथा भवति तथा प्रदर्श्यते-
तदुक्तं चरके "प्रत्यक्षपूर्वं त्रिविधं त्रिकालं चानुमीयते।
कार्यात् कारणानुमानं यथा गर्भदर्शनात् मैथुनानुमानम्।
कारणात् कार्यानुमानं यथा बीजादनागतं फलं। अकार्यकारण-
भूतानां च सामान्यतो दर्शनादनुमानं यथा वह्नि-
र्निगूढो धूमेन। अन्यच्च दैर्घ्याद्यायामतश्च वितस्तिप्रमाणमात्रं
प्रत्यक्षं चन्द्रबिंबं दृश्यते तथाप्यनुमानेन तत्प्रतिविध्यते। अनु-
मानेन (गणितशास्त्रेण) भविष्यन्तं सूर्योपरागं प्राङ्निश्चित्य
पश्चात्प्रत्यक्षं पश्यन्ति। गुरुभार्गवादीनामस्तोदयज्ञानं अनु-
मानेन निश्चितं भवति। यत्र च प्रत्यक्षानुमानादीनां विषयज्ञाने
सामर्थ्यं नास्ति तत्र हि शब्देन सिद्धिर्भवति। यथा मार्ग-
परिभ्रष्टः पुरुषः कुलीनस्योपदेशाद् दिष्टं स्थानं गच्छति।
अयमत्र निष्कर्षः, नहि एकेनैव प्रमाणेन व्यवहारसिद्धि-
र्भवति; एकैकेन प्रमाणेन प्रमाणैकदेशेन वा व्यवहरतां विश्वक-
व्यवहारलोपः प्रसज्येत यदि सामान्यतो दृष्टबलमनुमानं शब्दं च
वा न प्रमाणीकुर्युः। ..........

आयुर्वेदोपदेशस्य फलवत्त्वप्रतिपादकत्वं अज्ञातार्थप्रतिपादकत्वंच प्रत्यक्षादिभिरन्यप्रमाणैर्यत्र बाध्यते न तावत्केवलेन वाङ्मात्रेण कल्पनामयमिति वक्तव्यम्। तस्मात् व्यवहारसिद्ध्यर्थं सर्वाणि प्रमाणान्यादर्तव्यानि। अत एवोक्तम् 'एकं शास्त्रमधीयानो नविद्याच्छास्त्रनिश्चयं। तस्मात् बहुश्रुतः [illegible] शास्त्रं। विजानीयात् चिकित्सकः॥' दृक्प्रत्ययैकशरणा भूत्वा स्वचिन्तनवशात् तर्कयाऽर्धशकुली कृतः शास्त्रार्थः। तेन चार्थनिश्चयो दुर्लभः संजातः; नहि दृगेवैकं ज्ञाननिमित्तम्। बहवो ज्ञानस्य निमित्तभेदा विकल्पंते। सत्यामपि दृष्टौ नास्माकमालोकं विना रूपज्ञानं भवति। नक्तंचराणां विनालोकेन रूपज्ञानं भवति, योगिनां तु केवलेन मनसैव रूपज्ञानं भवति। प्रकाशभेदेनापि निमित्तभेदा भवन्ति। रूपज्ञाने काचकोरादीनां एवमेव बुद्धिभेदा अपि दृष्टिमाकुलयन्ति। त्रिदोषविषये दृक्प्रत्ययैकपरैर्बहुशो भ्रांतमिति बहुवक्तव्येऽपि नोच्यते। दृक्प्रत्ययपरा भूत्वापि परेषामांग्लादीनां प्रत्यक्षं प्रमाणयन्तो व्यवहरंतीति दृश्यन्ते। परेषां प्रत्यक्षं सत्यत्वेन सबहुमानमन्यानुपदिशंति। तत्र वयं पृच्छामः यदि च भवंत आंग्लादीनां प्रत्यक्षपूर्वं शब्दं प्रमाणयन्ति किं तन्नाप्यबाध्यमायुर्वेदोपदेशेन।

एतावानेव तत्र भेदः, नव्यत्वं पुराणत्वं च। यदि यो यथाविधमारोग्य-
शास्त्रं संप्रदायपूर्वं यथावदधीत्य भूयुक्तिदोषविज्ञानमधिगत-
मिति तर्हि तद्वचनमादरार्हं स्यात्, ननु संप्रति दुर्लभतरम्, नव्य-
मार्गीये विज्ञाने प्रत्यक्षेण विरुद्धमायुर्वेदानुशासन(माननीय)मिति। एवमत्र
सिध्यति युक्तिदोषविज्ञानमाक्षिपति न तथायुर्वेदस्यागुणत्व-
मगुणत्वं वा निमित्तं, शिक्षितृभाव एव प्रधानं निमित्तम्। यथा
प्रत्यक्षपूर्वकाणि प्रमाणानि पुरुषबुद्ध्यपेक्षाणि नायमायुर्वेद-
स्तथाविधः।

शिष्यः — कुतः।

आचार्यः — शाश्वतो हि आयुर्वेदस्तस्मादकृतकः, तदुक्तं चरके,
अकृतकत्वे हेतुत्रयम् अनादित्वात्, स्वभावसंसिद्धलक्षणत्वात्
भावस्वभावनित्यत्वाच्च; नहि नाभूत् कदाचित् आयुषः
संतानो बुद्धिसंतानो वा; अनादिश्च सुखदुःखलक्षणं, पारम्पर्य-
योगात्। भावानां स्वभावो हि नित्यः, स्वलक्षणं पृथिव्यादीनां
द्रव्याणाम् नित्यम्। नचायुर्वेदस्याभूत्वोत्पत्तिरुपलभ्यते-
ऽन्यत्राव बोधोपदेशाभ्याम्। वेद्यवेदनवेदितॄणामनादित्वादा-
युर्वेदस्यापि नित्यत्वम्। आयुर्वेदशास्त्रस्यायुःसंतानस्यानादित्वात्

तदुपकरणोऽयमायुर्वेदस्तथा भवितुमर्हति। नहि उपकरणा-
भावे उपकार्यत्वं संभवति। अत एव स्वलक्षणमुक्तमायुर्वेदस्य
"हिताहितं सुखंदुःखं आयुस्तस्य हिताहितम्।
मानंच तच्च यत्रोक्तमायुर्वेदः स उच्यते॥
वेदानां पौरुषेयापौरुषेयत्व निर्णये न मादृशानां क्षुद्राणामधि-
कारः। तच्च सकललोकैकवंद्यैः शंकर महानुवि भगवत्पूज्य-
पादादिभिः सुनिर्णीतम्। स एवास्मा मादृशैरनुयातव्यः।
अन्यच्च "ब्रह्मा स्मृत्वायुषो वेदं प्रजापतिमजिग्रहत् इत्युक्तं.
ननु कृत्वा प्रजापतिमजिग्रहदित्युक्तभाये नानित्यत्वमायुर्वेदस्य
प्रसज्येत। अन्यच्च, अस्ति च सकलशरीरव्यापिनी सर्वात्मना
हितानुबंधिनी प्राणसमाख्या शक्तिर्यस्या आस्तित्वे औषधा-
न्नविहाराः स्वार्थमापादयितुं शक्नुवन्ति रोगप्रतीकारश्च
सुलभो भवति यस्याश्च क्षयात्सततमुपतप्यमानं शरीरं
शारीरमानसाभ्यां रोगाभ्यां क्षीयते। औषधान्नविहाराश्च न
यथावत्परिणमंति। अस्मिन्नर्थे पाश्चात्यानां पौर्वात्यानां च
न विसंवादः [प्रत्यक्षेण प्रमाणेनानिर्देश्यायाः प्राणशक्तेरस्तित्वे
सर्वेषामैकमत्यमस्तीत्यर्थः। तस्मात् दृशा दोषा न दृश्यन्ते-
(ज्ञायन्ते) इत्येव कारणात् तदभावसमर्थने ईदृशं प्रवचनचापलं-

न युक्तरूपं प्रतिभाति

शिष्य: — के च ते दोषा नाम येषु भवतां गौरवबुद्धिः कीदृक् च तेषां स्वरूपं कानि च लक्षणानि तानि ज्ञास्यते

आचार्य: — शृणु कथयामि तेऽति सौक्ष्म्यात् दुर्विज्ञेया हि दोषाणां गतिः। तास्च कार्यत ~~...~~ उपलक्षयितव्या भवन्ति। निर्देष्टुमशक्यतया नास्तीति मन्तुं न युज्यते। यथा हि शरीरगतमप्यति सौक्ष्म्याद् अदृश्यमानं विषं कार्यत एतज्जातीयमिदमित्यनुमाय* विषेणोपतप्यमाने देहे उपचरन्ति कुशला:। न त्वदृश्यमानत्वान्नास्तीति मन्यन्ते। यथा चाग्निरुपाधिरेवाग्निर्देष्टुं शक्यो नान्यथा। तथाप्यग्नेरभावं न केचिदपि कल्पयन्ति। तथा च नायुर्वेदे दोषत्रयविज्ञानं नाम वृथाडम्बरं प्रत्यग्रं तत्त्वं प्रक्षिप्तं। अस्त्येव दोषत्रयम्। पंचमहाभूतेषु तेजोनिलसलिलानि सोमसूर्यादिव्यपदेशेन चेतनाचेतनं प्राणिजातमनुगृह्णन्ति। तदेव भूतत्रयं शरीरगतमनुगृह्णद् दोषशब्देन व्यपदिश्यते।

शिष्य: — अत्रास्ति प्रष्टव्यं, कार्योत्पत्तौ समानापेक्षीणि पंचभूतान्याकाशादीनि। पंचस्यैकतरविनाशे शरीरं विनाशं प्रतिपद्यते। एवं सति भूम्याकाशयोः कथं दोषपक्षे परिगणनम्। उक्तं चायुर्वेदे 'पञ्चीकृतपंचमहाभूतविकारसमुदाया-

* लक्षणैर्ज्ञात्वा

त्मको देह इति। तथाच पंचानां भूतानां गुणाधर्माश्च शरीरे
विद्यमानाद्दृश्यन्ते। महाभूतानि पंच, भूतविशेषेण विशिष्टा गुणाः
पंच [शब्दस्पर्शरूपरसगंधाः] तेषांच पंचानां गुणानां ज्ञान-
साधनानींद्रियाणि पंच (श्रोत्रत्वगक्षिरसनाघ्राणानि) द्रव्याण्य-
पि पंचविधानीत्युक्तम्। यद्यपि पंचमहाभूतविकारसमुदाया-
त्मकानि सर्वाणि द्रव्याणि तथाप्यस्ति तेषां द्रव्याणां तत्तद्भूत-
विशेषेण भेदः। आकाशगुणभूयिष्ठमाकाशीयं द्रव्यं, वायुगुण-
भूयिष्ठं वायवीयं, तेजोगुणभूयिष्ठं तैजसं, अप्गुणभूयिष्ठं
आप्यं, पृथिवीगुणभूयिष्ठं पार्थिवं। एवंच पंचविधानां
द्रव्याणां पाञ्चकाल्योऽपि पंच "खं श्रोत्रे स्पर्शनेऽनिलं दर्शने
तेज उत्कटं। सलिलं रसने, घ्राणे भूमिस्तद्धै निरूपितम्॥
इंद्रियेणेंद्रियार्थं हि स्वं स्वं गृह्णाति मानवः।
नियतं तुल्ययोनित्वान्नान्येनान्यमिति स्थितिः॥
शरीरे यत्तु विशेषतः स्थूलं, स्थिरं, मूर्तिमत्, गुरु, खरं कठिन-
मंगं नखास्थि दंतवेष्ट मांसचर्मवर्चः केशः श्मश्रुलोम कंडरादि,
स पार्थिवांशः। यत् द्रवसरमंदस्निग्धमृदुपिच्छिलरसरुधिर-
वसाकफपित्तमूत्रस्वेदादि स आप्यांशः। यत्पित्तं याश्च भाः
शरीरे तत्सर्वं तैजसांशः। यद्विविक्तमुच्यते महानि चाणूनि —

स्रोतांसि सनाभ्यवकाशः। एवंस्थिते पंच एव दोषाः संख्यातुं युक्ता इति स्याने। पुरा कस्मिंश्चित् काले जनाः प्रायस्त्रित्वसंख्यया संख्यया व्यवहरंति स्मेति तर्क्यते। त्रयो लोकास्त्रयोऽग्नयस्त्रयो गुणास्त्रिविधानि द्रव्याणि त्रिविधं दुःखं त्रयो मुख्या देवा इत्यादि त्रिसंख्याकत्रिमूलव्यवहारानुसारेणायुर्वेदेऽपि तथैव संख्यया व्यवहारो दृश्यते त्रयो दोषास्त्रिविधं परिमार्जनं त्रिविधं बलं त्रयो रोगमार्गास्त्रयोऽवष्टंभा इति।

आचार्यः— बाढं व्यर्थोऽयं ते वाग्विसर्गः। युक्तिशून्यैवं च ते विचिकित्सा। प्रयोजनाभावात्पृथिव्याकाशौ न दोषपक्षे संगृहीतौ। वाय्वाकाशयोस्तु व्याप्यव्यापकसंबंधः [यत्र यत्र वायुस्तत्र तत्राकाशः] इति नियमात् शरीरेऽप्येवमेव यत्र यत्र वायुस्तत्र तत्राकाश इति स्पष्टम्। कारणगुणाः कार्येऽप्यनिविशान्तौ। "कारणानुविधायित्वात्कार्याणां तत्स्वभावता," तदुक्तं सुश्रुते "वियत्पवनजाताभ्यां वृद्धिमाप्नोति मारुतः,"। आकाशगुणभूयिष्ठद्रव्येण जायमाना विकृतिर्वातोपक्रमेण शाम्यति।
"भूतेजोवारिजैर्द्रव्यैः साम्यं याति समीरणः।," भूतेजोवारिजानि द्रव्याणि गुरूष्णस्निग्धगुणभूयिष्ठानि। वायोराकाशस्य च

---

टीप *१ दक्षिणाग्निः गार्हपत्याग्निः आहवनीयाग्निः।
टीप *२ आध्यात्मिकं आधिदैविकं आधिभौतिकं.

लघुशीत रूक्षादयो गुणाः। तद्विपरीता गुरूष्णस्निग्धादयः। आका-
शोऽविक्रियत्वेन स्वगुणदोषप्रकाशनाय नालं भवति। एवं निष्प्र-
योजनत्वाद्यथोक्तोपयोगवानप्याकाशो दोषपक्षेन संगृहीतः।
तथा च स्थैर्यात् गौरवाच्च पार्थिवद्रव्यं स्वयं नान्यभावं गच्छति।
पार्थिवद्रव्यावयवानां शरीरे संचरणमाप्यद्रवद्वारेणैव
भवति। शरीरे स्थिरभावं गताः पार्थिवांशाः स्वस्थानाला-
न्यत्र संचरंति। आप्यद्रव्यं वातगतिवशंवदमापादतल-
मस्तकं संचरति। आप्यपार्थिवयो विकाराः प्रायः समान-
लिंगाः येनोपक्रमेणाप्यद्रव्यजाता विकाराः शाम्यन्ति^।
आप्यपार्थिवद्रव्यैः श्लेष्मणः स्निग्धशीतगौरवादिगुणा वर्धन्ते।
विपरीताः क्षीयन्ते। तदुक्तं सुश्रुते "वसुधाजलजाताभ्यां-
बलासः परिवर्धते। स्वतेजोऽनिलजैर्द्रव्यैः शाममेति शरीरिणाम्॥ ३
स्वतेजोऽनिलसमुद्भवानि द्रव्याणि रूक्षोष्णतीक्ष्णलघुत्वादि-
गुणयुक्तानि तानि स्निग्धशीतमंदगुरुत्वादीनां विरोधीनि।
विपरीतगुणाभ्यासो ह्रास-कारणं तस्मात्पृथिव्या न दोषसंग्रहे
प्रयोजनं। अतः शारीर कुपितदोष संभव एवं निरूपितः। तदुक्तं-
संग्रहे. . . . . . . . . . . . . . . . . . . . . . . .

^ तेनोपक्रमेण पार्थिवजा विकाराः शाम्यंते।

"वाय्वाकाशाभ्यां वायुस्तेजसः पित्तमम्भःपृथिवीभ्यां श्लेष्मा, इति सुश्रुतेऽप्येवमेव निष्कर्षः। विसर्गादानविक्षेपैः सोमसूर्यानिला यथा। धारयन्ति जगत् देहं वातपित्तकफास्तथा॥"

शिष्यः— कोऽयमत्रिविवेको भवतास्त्रिदोषाणां सद्भावसमर्थने। संप्रति हि संति लक्षणि च स्यात्तु रहितानि शास्त्राणि प्रकाशतां गतानि यत्र वातपित्तकफानां नामापि न श्रूयते आरोग्यार्थमुपयुज्यन्ते च तानि। तथाऽऽयुर्वेदोऽपि अन्यशास्त्रवत्तच्च-स्यात्तु रहिताय भवेदेव का तत्र क्षतिः स्यात्।

आचार्यः— त्रिदोषविज्ञाने बाधिते सर्वोऽप्यायुर्वेदो बाधितः स्यात्। अन्यच्च त्रिदोषविज्ञानं हि प्रधानमंगमायुर्वेदस्य येन च रोगविनिश्चये तेषां प्रतिक्रियायां साध्यासाध्यज्ञाने च चिकित्सन् भिषक् न जातुचित् स्खलति। यथा चेदं त्रिदोषविज्ञानं प्रिय विद्याप्रवर्तकानां संमतं तथान्येषामपि रागद्वेषरहितानां ज्ञानतपोविद्यानुभवैर्वृद्धानां नेदं संदेहवदासीत्। सर्वेष्वस्मदीयेषु शास्त्रीयेषु श्रुतिस्मृत्यादिग्रन्थेषु प्रसंगवशात् तत्र तत्र त्रिदोषोपन्यासो निदर्शकत्वेन दृश्यते। तथा च शल्यशालाक्यादीन्यष्टांगान्यायुर्वेदस्य।

तेषु सर्वेष्वंगेषु प्रति प्रकरणे वातपित्त-कफानां निर्वचनं कृतं दृश्यते। अविकृताश्च वातपित्तश्लेष्माणो देहसंभवास्थितिहेतव इतिचोपवर्ण्यते।

शिष्यः— पंचीकृतपंचमहाभूतविकारसमुदायात्मकश्चेतनाधिष्ठानभूतो मातुः पितुश्च शरीरगतैर्बीजभूतै र्भावैः समुदितयोः शुक्रार्तवयोः संमूर्च्छनात्किलायं देह उत्पद्यते तस्मिन्देहे केचित् नित्याभावाः केचिदनित्याः केचित्क्षीयन्ते केचित् वर्धन्ते। एवं गर्भकराणां नित्यानित्यानां भावानां नानाविधानां सतां वातादयस्त्रय एव मूलं देहस्य। तेचाव्यापन्नाः शरीरं सुखेन योजयन्ति। व्यापन्नाश्च दुःखहेतव इति यत्समुद्घुष्यते तत्तु केवलं कल्पनामूलं। आत्मनो ज्ञानाभावं पिधातुकामैः कैश्चिदायुर्वेदे प्रादिष्टमिति-मन्यामहे। स्रवति च रुधिरे मूत्रे वा छिन्ने भिन्ने वा शरीरे शरीरावयवे वा न तत्र वायुः पित्तं कफो वा दृश्यते। तस्मादेतत्त्रिदोषविज्ञानं पूर्वेषां पूर्वतरेषां च महर्षीणामभिमतं वेदानुशासनमित्येव वा कारणात् युक्तिवादग्रन्थमिदमांग्लेभ्यो लब्धविज्ञाना वयं नाद्रियामहे इति केचिदाक्षिपन्ति

आचार्यः — तात आयुर्वेदस्याष्टांगानामेकमपि तंत्रमनभ्यस्य
केवलमविमृश्यकारितया प्रलपन्ति। यथाच्च काचरत्नादीनाम-
परीक्षका नतानि विशेषेण जानन्ति। चाकचक्यमात्रसवर्णत्वैक-
विधान्येव मन्यन्ते। अत एव विपश्चिद्भिर्द्विविधो भेदः कृतः। परी-
क्ष्यकारिणः परीक्षका अपरीक्ष्यकारिणो लौकिकाश्चेति। परप्रत्यय-
नेयबुद्धीनां लौकिकानां मिथ्याज्ञानमूलाः संशया न विचारणा-
मर्हन्ति। तथाप्यचिरसंशयास्तेऽस्मान्नितान्तमत्वाऽऽयुर्वेदे वृथा-
डंबरभूतं चिरंतनं त्रिदोषविज्ञानं विध्वंसितमस्माभिरिति यत्र
तत्र घोषयेयुः। तस्मात्पृष्टान् संशयान् निःशेषयामि।

शिष्यः — किमेते दोषा द्रव्यभूता होऽद्रव्यम्।

आचार्यः — कुतः संशयः? द्रव्यं हि खल्वेते।

शिष्यः — किंच यत्तेनोदरमाध्मायते यश्चोद्गाररूपेण बहि-
र्गच्छति, जृंभाक्षवथुरूपेण चोर्ध्वमार्गेण च निष्क्रामति। अपानतो
यश्च सशब्दं निःसरति, अपि स वायुः; यच्चाम्लसर्षपमरिचसगंधि-
नीलपीतादिवर्णं तिक्तमम्लं वा क्वचित्, उद्वमति, अपि तत्पित्तम्?;
यच्च कदाचित्फेनिलं घनरसनिर्यासरूपं वा पिच्छिलं पूय-
सदृशं वा कासमानष्ठीवति। यच्च कदाचित् फेनिलं वा कृष्णं च्यव-
पानमार्गेण, अपि स कफः?

आचार्यः- विकृतानां दोषाणां तत्कार्यम्

शिष्यः— किं तर्हि दोषसंज्ञितं चान्यत् द्रव्यं यथा शरीरगताः सप्त धातवः कंडरा शिरा स्नायु मांसपेश्यादीनि खानि च सर्वाणि येभ्यो मलभूतानि द्रव्याणि बहिर्यान्ति, एतत्सर्वं प्रत्यक्षमुपलभ्यते। यच्चोक्तं त्रयो हि दोषा इति ते न दृश्यन्ते तस्मात् दोषा न द्रव्यसंज्ञामर्हन्ति।

आचार्यः— किं द्रव्यं किमद्रव्यमिति नास्माभिर्निर्णेतव्यम्। पूर्वाचार्यैर्द्रव्यस्य लक्षणमुक्तं तेन लक्षणेन यल्लक्ष्यते तद्द्रव्यं। द्रव्यस्य लक्षणं न्यायशास्त्रानुसारेणोक्तं चरके तद्यथा "यत्राश्रिताः कर्मगुणाः कारणं समवायि यत्॥ तद्द्रव्यमिति।

शिष्यः— यदि दोषाः द्रव्यं ~~किं~~ कानि तेषां लक्षणानि यैर्दोषाः 'पृथक्त्वेन बोध्येरन्' अयं वायुरिदं पित्तमयं कफः इति।

आचार्यः— उच्यते शृणु। यस्मिंश्च शब्दः स्पर्शो धृति(धारणशक्तिः) गतिश्च विद्यते, तथा रूक्षत्वं लघुत्वं शैत्यं खरत्वं सूक्ष्मत्वं धातुव्यूहनकारित्वं [धातुरचना धातुवर्धनं च) यस्मात् भवंति स वायुः [शब्दादिव्यूहनकरणांतानां यो हेतुः स वायुरित्यर्थः]

दहनपचनप्रकाशनप्रभादीनि यतो भवंति तत्पित्तम्। रूपरस-
स्पर्शद्रवस्नेहवान् श्लेष्मा। एवं रूपा हि वातपित्तश्लेष्माणः। ते सम-
योगयुक्ताश्चेच्छरीरस्वास्थ्यमनुवर्तयंति। वैषम्यं गता दुःखेन
योजयंति।

शिष्यः— परस्परविरोधिनो वातपित्तश्लेष्माणः शरीरधारणलक्षण-
कार्यं कथं कर्तुं शक्नुवंति।

आचार्यः— यथाऽनलविरोधिनी वर्ति तैले, अथानलेन सह
मिलिते रूपप्रकाशनकार्यं कुरुतः। एवमेव वातपित्त-
श्लेष्माणः परस्परविरुद्धधर्माणोऽपि शरीरधारणस्वास्थ्यानु-
वृत्तिलक्षणं कार्यं कुर्वंति। अनुभवसिद्धेऽर्थे नास्ति संदेहाव-
काशः

शिष्यः— समयोगयुक्ता दोषाः स्वास्थ्यमनुवर्तयन्ति इति
यदुक्तं तत्केन प्रमाणेन तेषां साम्यमाकारतो कर्मतो गुणतो वा।

आचार्यः— न ह्याकारतस्तु वातस्य दोषाणां शरीरे मानं तुल्यं,
गुणतस्तु तेषां मानं तुल्यं। चरके चैवं वातपित्तकफयोर्मानमुक्तम्
स्वेन स्वेनांजलिप्रमाणेन पित्तं पंचांजलिपरिमितम्।
श्लेष्मा षडंजलिपरिमितः। सूक्ष्मत्वात् वायोर्मानं मियत्तया
वक्तुं दुःशकम्।

शिष्यः- नास्ति वायोर्मानापेक्षा, इत्युक्ते किं हीयेत ?

आचार्यः- नेदं मन्तुं युक्तम्

शिष्यः- कुतः ?

आचार्यः- मानापेक्षीणि सर्वकार्याणि। भावानां कार्यनिर्वर्तने यदि मानं नोचेत् तर्हि न सदृशानि कार्याणि स्युः, ताल तमाल-खदिर किंशुक पनसादयो वृक्षाः परस्परभिन्नास्तेषां पंचभूतात्मकत्वे सत्यपि घटकावयवानां मियत्तया मानज्ञानं यद्यपि न भवति तथापि किंचिदस्ति तेषां घटकावयवानां मानं येन च तारतम्यं भवति खदिरात् खदिर इत्यादि तत्तद्वृक्षबीजेन तत्तत्सदृशा वृक्षा जायन्ते। अनेन मानापेक्षीणि सर्वाणि द्रव्याणीति सिद्धम्। वायोर्मानमियत्तया न भवतीत्येव कारणाद्वायोर्मानं नास्तीति मन्तुं न युज्यते इति तात्पर्यम्

शिष्यः- दुर्ज्ञेयं चेन्मानज्ञानं मास्तां तत्। यदुक्तं स्वं स्वं मानमवास्थिता दोषाः स्वास्थ्यहेतवः, वैषम्यं गताश्च स्वास्थ्यनाशना इति। तद्दोषाणां साम्यमसाम्यं च कथमुपलक्षयितव्यम्।

आचार्यः- देहस्वास्थ्येन दोषाः समयोगयुक्ता इत्यवगन्तव्यं। देहस्यास्वास्थ्येन वैषम्यं गता इति।

शिष्यः- देहस्य स्वास्थ्येन दोषाः स्वं स्वं मानमवास्थिता इति जानीयादस्वास्थ्येन च दोषा वैषम्यं (न्यूनाधिकभावं) गता इति च। . . . . . . . . . . . . . . . . . . . . .

दोषाणां समानावस्थानेन स्वास्थ्यं, वैषम्यगमनेन चास्वास्थ्यं जानीयात् "समदोषः समाग्निश्च समधातुमलक्रियः। प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते॥ इति च स्वस्थलक्षणं तेन चान्योन्याश्रय दोषो भवति, स यथा दोषाणां साम्येन वैषम्येण च देहस्य स्वास्थ्यमस्वास्थ्यं जानीयात्, देहस्य स्वास्थ्येनास्वास्थ्येन च दोषाणां साम्यं वैषम्यं च विजानीयात् इति। तस्मात् दोषाणां साम्यवैषम्यभावस्य यथा सुखेन स्पष्टं ज्ञानं भवेत् तथोपदेष्टव्यम्।

आचार्यः– यानि लक्षणानि, दोषाणां समानावस्थानं, सुखेन बोधयंति तानीमानि लक्षणानि चरके "उत्साहोच्छ्वास निश्वासचेष्टा धातुगतिः समा॥ समो मोक्षो गतिमतां, इत्यादि लक्षणैः ~~[illegible]~~ वायुर्यथास्वं मानमवस्थित इति विजानीयात् ~~[illegible]~~

"दर्शनं पक्तिरूष्मा च क्षुत्तृष्णा देहमार्दवम्। प्रभा प्रसादो मेधा च" इत्यादिभिर्लक्षणैः पित्तं यथामानस्थितमिति विद्यात्

"स्नेहो बंधः स्थिरत्वं च गौरवं वृषता बलम्। क्षमा धृतिरलोभश्च" इति लक्षणानि समानावस्थितस्य कफस्य बोधयन्ति।

शिष्यः– दूषयंतीति दोषाः ~~कि~~ इति निरुक्त्या किमयं ~~[illegible]~~-

दोषाणां शरीरे संबन्धः समवायेनोतासमवायेन*। समवाय-संबन्धश्चेत् प्राणिनो नित्यातुरा भवेयुः। असमवायसंबन्धश्चेत् न ते नित्यं दोषसंज्ञामर्हन्ति। अन्यच्च दोषाणां न्यूनाधिकभाव-श्चेत् दोष इति संज्ञायाः कारणं तर्हि न्यूनाधिकभावं गता रसादिशुक्रान्ता धातवो मलाश्च दोषसंज्ञामर्हन्ति। तेषामपि न्यूनाधिकभावेन देहो न स्वास्थ्यं लभते तथापि न तेषां दोष-शब्देन कुत्रचिदपि व्यपदेशः कृतः। धारणात् धातव इति कार्यकारित्वेन धातूनां मलानां वातपित्तकफानांच तुल्यैव धातुसंज्ञा। तस्मात् समभावस्थिताः सर्वे धातुशब्देन वाच्याः। तथैव वैषम्यं गताः सर्वे दोषशब्देन वाच्याः।

आचार्यः- धातूनां मलानांच वैषम्यं वातपित्तकफमूलकमेव। न ते स्वयं दुष्यन्ति नान्यान् दूषयन्ति। तदुक्तं भावप्रकाशे

"धातवश्च मलाश्चापि दुष्यन्त्येभिर्यतस्ततः॥

वातपित्तकफा एते त्रयो दोषाः समासतः॥

नहि वातादीनां रोगाणांच संश्लेषो विश्लेषो वा शाश्वतिकः। यथाहि विद्युद्वाताशनिवर्षाणि आकाशं प्रत्याख्याय न भवंति तथाच तरंगबुद्बुदादयश्चोदकविशेषाः। तस्मात् नित्यदूषण-

* नहि वातादीनां ज्वरादीनांच नित्यः संश्लेषो विश्लेषो वेति प्रतिपादितम्। तेनैवं सिध्यति यच्च दोषेषु दूषकत्वं तत्तु निमित्तसापेक्षं (नच ते कारणं विना स्वयं दुष्यंति, अन्यान् वा दूषयंति)। यच्च यत्र तत्र वातादयो दोषशब्देन संबोध्यंते तापि त्येदूषणस्वभावत्वात्। किंतु शरीरगतेभ्यो भावेभ्यस्ते हेतौ जाते प्रथमं स्वयं दुष्यंति अन्यांश्च दूषयंति। नान्ये धातवो हेतुभिः स्वयं दुष्यन्ति। अन्यच्च प्रयुक्तं माधवे चरकेच रक्तं लसीकाल्वङ्मांसं संदूष्य दोषास्त्रयो मलाः॥ विसर्पाणां समुत्पत्तौ विज्ञेयाः सप्तधातवः॥ इति तस्मात् दोषधातुमलादिभ्यो वातादीनां व्यवच्छेदार्थं मितिसिध्यति।

स्वभावत्वात् वातादीनांदोष संज्ञा। अन्येभ्यो शरीर गतेभ्यो भावेभ्यो निमित्ततस्ते प्रथमं दुष्यंति पश्चादन्यान् दूषयन्ति। तस्मात्तेषां दोषसंज्ञा। संतिच्च कार्यसामान्या दन्यानि नामधेयानि वातपित्तश्लेष्मणाम्। देहस्य मलिनीकरणान्मलाः धारणात् धातवः। स्थूणा इवागारस्य देहाधारत्वात्स्थूणा इत्युच्यंते इति अष्टांग संग्रहे तत्तन्नामनिरुक्तिः। संज्ञासंज्ञि संकेतमन्तरेण न व्यवहार सिध्दिः। यथाच्चजउ-मते निर्विषयस्य नियाधर इति नाम संज्ञायै एव केवलं तथास्थूणा धातवो मला इति नामानि न केवलं संज्ञामात्राणि किंतु अर्थानुबंधीनि तानि। यच्च वातादयो विशेषेण दोषशब्देन व्यपदिश्यन्ते तत्तु धातु-शब्दवाच्येभ्यो रसेभ्यो मलेभ्यश्च व्यवच्छेदार्थम्।

शिष्यः- कतमा वात पित्त श्लेष्मणामसाधारणाधर्माः केच समाना धर्माः कैर्गुणैः कार्यं पृथक् पृथक् निर्वर्तयन्ति।

आचार्यः- वायोर्गतिमत्त्वं पित्तस्यौष्ण्यं स्निग्धत्वं कफस्य। एते वातपित्तकफानां त्रयोऽसाधारणा धर्माः। द्रव्यत्वं देहस्वास्थ्य-हेतुत्वं शरीरदूषणत्वं परमाणुरूपत्वं शरीरव्यापित्वं चेति वाता-दीनां साधारणा धर्माः। यैर्गुणैः शरीरमुपकुर्वन्ति तदुच्यते। *रौक्ष्य लाघव वैशद्य लत्व बहुत्व शीघ्रगत्व परुषत्व शीतत्व—

टीप* यदा एते गुणा वृध्दाः क्षीणाश्च भवंति तदा पीडाकरो भवति।

यैर्गुणैः पित्तमनुगृह्णाति
विशदत्वादिगुणै र्वायु रनुगृह्णाति। इमे गुणा, औष्ण्यं
तैक्ष्ण्यं* द्रवत्वं विस्रत्व मीषत्स्निग्धत्वं तिक्तत्व मम्लत्वमिति।
स्निग्धत्व श्लक्ष्णत्व* मृदुत्व मधुरत्व सारत्व सांद्रत्व
मंदत्व स्तिमितत्वाच्छत्व संधिबंधित्वादिगुणैः
श्लेष्मानुगृह्णाति। एतै र्यथोक्तगुणै र्वातादयः स्रोतो
मार्गेण सर्वशरीरसंचारिणः शरीरस्वास्थ्य मनु-
वर्तयन्ति। तदुक्तं सुश्रुते "वात पित्तकफा
ह्येते सर्वस्रोतोऽनुचारिणः॥" स्रोतांसि
लेखामयन भूतानि

शिष्यः—

एते दोषा नित्यमेवाऽखिलं स्वैः स्वैः
सर्वै गुणै र्व्याप्य स्थिता उताहो न्यूना-
धिकभावेन। तथाच शरीरं व्याप्नुवतां—

---

टीप * क्षीणै र्वृद्धैर्वा गुणैः पित्त श्लेष्माणौ पीडाकरौ।

दोषाणां कतिधा कीदृशीच्च गतिः।

आचार्यः— "नित्याः प्राणभृतां देहे वातपित्तकफास्त्रयः।
रौक्ष्यं वातस्य पित्तस्य तैक्ष्ण्यं स्नैग्ध्यं कफस्यच्च॥" इति-
त्रयाणां त्रयो गुणाः सर्वदेहगता ऊर्ध्वमधस्तिर्यक्च दोषाणां
शरीरे प्रसरणम्। क्षयः स्थानञ्च वृद्धिश्च विज्ञेयाऽपरा त्रि-
विधा गतिः। "त्रिविधाचापरा कोष्ठशाखामर्मास्थि संधिषु॥"
शिष्यः— सर्वशरीरचरा एते समेत्य कार्यं निष्पादयन्त्युत
पृथक्त्वेन। यच्च कार्यं कुर्वन्ति तद्यौगपद्येन पारंपर्येण वा।
तथाच तेषामयनभूतानि स्रोतांसि प्रत्येकस्य भिन्नभि-
न्नानि वा प्रतिस्रोतःसममेवैक कालं वा सर्वेषां संचरणम्।
आचार्यः— दोषाः समेत्य कार्यं कुर्वन्ति न तु पृथक्त्वेन।
तथाप्यस्ति तेषामीजत्तम कालेन पारंपर्यक्रमः। स्रोतांसिच्च
वायुवहानि भिन्नानि पित्तवहानि भिन्नानि श्लेष्मवहानि च भिन्नानि,
इतिमंतव्यं तदुक्तं सुश्रुते नहि वातं शिराः काश्चित् न पित्तं
केवलं तथा। श्लेष्माणं वा वहन्त्येता अतः सर्ववहाः स्मृताः॥"
शिष्यः— कथमेतदुच्यते, इमा वातवहा इमा पित्तवहा
इमाः श्लेष्मवहा इमा रक्तवहा इमा रसवहाः शिरा इत्युपदिश्यते।

सर्ववहानि चेत स्त्रोतांसि कथं वातवहानि पित्तवहानि, इत्यादि विशेषेन स्त्रोतांसि बोधव्यानि।

आचार्यः— स्त्रोतोभिर्वहतां दोषाणां यदा यदा यो यो बलवान् भवेत स दोषः स्त्रोतः स्वात्मलिंगानि दर्शयति तेषां विशेषः सुश्रुते तद्यथा "तत्रारुणाज्ञातवहाः पूर्यंते वायुना शिराः।

पित्तादुष्णाश्च नीलाश्च शीता गौर्यः स्थिराः कफात्॥"

कफपित्तमारुतानां यथापूर्वं विरलविरलभावात् सूक्ष्मसूक्ष्मत्वं। तेन नासंभाव्यमेकावकाशावस्थानं दोषाणाम् अत्र निदर्शनम् गोधूमपूर्णायां पेट्यां सर्षपाः सुखेनावकाशं लभंते। गोधूम-सर्षपाणामनवकाशायामपि तस्यां पेट्यां सिकतापुंजा मांति। अथ केनचित्पृष्टे गोधूमाः संति? अस्यां पेट्यां? सर्षपाः? अस्यामेव पेट्यां? सिकतापुंजा? अस्यामेव पेट्याम्? एवं-गोधूमसर्षपसिकतापुंजपूर्णायामपि पेट्यां यत्प्रधाना सा पेटी तस्य नाम्ना पेटी व्यपदिश्यते। एवं स्त्रोतःशिरादिषु यदा यदा यो यो दोष उत्कटो भवेत तदा तदा तत्तद्वहा इति निर्दिश्यन्ते।

शिष्यः—यदुक्तं दोषाणां सामान्यं तद्व्यतिरिक्तमन्यैः—

कैश्चित् धर्मैः साम्यमस्ति न वा।

शीतगुणमात्रेण साधर्म्यम्।

आचार्यः — ईदृक्च गुणतः साधर्म्यम्। भिन्नगुणयोः वातकफयोः
वातपित्तयोः भिन्नौ गुणौ रूक्षोष्णौ, तयोः कार्यतः साधर्म्यं न तु गुणतः।
रूक्षगुणः शोषणः, उष्णगुणोऽपि। एवं शोषणरूपं कार्यमुभा-
भ्यां रूक्षोष्णगुणाभ्यां भवति। तस्माद्वातपित्तयोर्गुण-
कार्यतः साधर्म्यम्। तथैव लघुत्वेनाप्येवमेव। तथा च पित्त-
कफयोर्द्रवस्निग्धाभ्यां गुणाभ्यामीषत्साधर्म्यम्।

शिष्यः — प्रतिक्षणं च शरीरगतानां भावानां (शरीरघटका-
वयवपरमाणुरूपाणां) क्षयवृद्धी भवतः। एवं स्थिते कथं
कथं दोषाणां नित्यताऽवगम्यते।

आचार्य — धारावाहिकज्ञानेन हि दोषाणां धातूनां च नित्यता।
समानगुणाभ्यासो हि वृद्धिकारणम्। विपरीतगुणाभ्यासो
ह्रासकारणम्। बाह्यद्रव्यगुणाः शरीरगतान् स्वसमानगुणान्
वर्धयन्ति स्वविपरीतान् ह्रासयन्ति। तदुक्तं सुश्रुते

"गुणा य उक्ता द्रव्येषु शरीरेष्वपि ते तथा।
स्थानवृद्धिक्षयास्तस्मात् देहिनां द्रव्यहेतुकाः॥"

यावन्तः पुरुषे भावविशेषास्तावन्तो लोके यावन्तो लोके
तावन्तः पुरुषे, इति चरके॥ . . . . . . . . . . . . .

शरीरगतैस्त्रयोदशविधैरग्निभिः स्वस्ववैगुण्यादयथावत्
पच्यमानाः अत एव न्यूनाधिकभावं गता द्रव्यगुणा रोगहेतवो
भवंति। यद्गुणविशिष्टानि द्रव्याणि भवंति तद्गुणविशिष्टान्
दोषान् वर्धयंति। नैवंविधोऽस्ति वालाग्रसूक्ष्मोऽपि ~~शरी~~
शरीरगतभावो यस्य दोषैरनाश्रितः। एवमेते शरीरे वर्तमाना
वातादयः "विकृता विकृता देहं घ्नंति ते वर्धयंति च"
शिष्यः — विदितास्ते यथोक्ता वातादीनां त्रयाणां त्रिविधा
विशेषधर्माः। तेषां च भवद्भिर्यथास्थूलं संक्षिप्य निगद्य-
मानानि कार्याणि श्रोतुमिच्छामि।

आचार्यः — शृणु कथयामि; ज्ञानकर्मेंद्रियाणां शरीरभाव
गतानां स्थूलसूक्ष्माणां चावयवानां बाह्याभ्यंतराश्रयमानाः
सर्वाश्चेष्टा येन भवंति स वायुः। देहस्थांतर्बहिस्थितानि
चलाचलानि रोगबीजानि भस्मसात्कर्तुं यत्क्षमो भवति, यच्च
लेह्यपेयभक्ष्यादिभ्यवहार्येषु कोष्ठगतेषु द्रव्येषु पाचनक्रियया गुणांतर-
माधाय तानि द्रव्याणि शरीरगुणभावं गतानां स्वेषां स्वेषा-
मंशानां पोषणक्षमाणि करोति तत् पित्तं।

शरीरस्य जीवनशक्तिः सर्वात्मना यमाश्रित्य स्थिता, तथाच वायोः रूक्षगुणेन (शोषणशक्त्या) पित्तस्योष्मणाच्च क्षपितं देहगतं स्नेहार्द्रभावं यो वर्धयति सः श्लेष्मा। एवं प्रभावसंपन्नेषु सत्स्वपि वातादिषु स्वस्वकार्य-निर्वहणे पृथक्त्वेन नैकः शक्नोति। देहस्य धारणपोषणजीवनानुवृत्तिरूपं कार्यं साधयितुं त्रयो हि दोषाः परस्परमनुबध्नन्ति।

शिष्यः— किमेते दोषास्तुल्यबला अतुल्यबला वा, सर्वे च स्वतन्त्राः परतन्त्रा वा।

आचार्यः— भिन्नभिन्नधर्मत्वान्न दोषाणां बलं तुलयितुं शक्यं। कार्याभिनिष्पत्तौ त्रयाणां तुल्यापेक्षित्वमस्ति। दोषेष्वन्यतराभावे देहधारणादिरूपं कार्यं न भवेत्। यथाहि तण्डुलानामोदनपचने मारुताग्निसलिलानि तुल्यापेक्षीणि संति। न तत्र सलिलाग्निमरुतामन्यतराभावे ओदननिष्पत्तिः। तस्मान्न निर्णेतुं शक्यं मारुतशक्तिर्गरीयसी सलिलस्य न्हेवा। तथैव दोषाणां बलतः तुल्यत्वमतुल्यत्वं वा न निर्णेतुं शक्यम्। सर्वेषु वायुरेव भगवान् स्वतन्त्रो नेता सूक्ष्मात् सूक्ष्मतरः 'रजोगुणमयः सूक्ष्मः, विभागकरणाद्वायुः, 'पित्तं पंगु कफः पंगुः पंगवो मलधातवः,

वायुना यत्र नीयन्ते तत्र वर्षन्ति मेघवत्॥" "स्वयंभूरेष भगवान् वायुरित्यभिशब्दितः। स्वातंत्र्यान्नित्यभावाच्च सर्वगत्वात् तथैव च॥ सर्वेषामेव सर्वात्मा सर्वलोकनमस्कृतः। अचिन्त्यवीर्यो दोषाणां नेता रोगसमूहराट्॥ आशुकारी मुहुश्चारी," "दोषधात्वग्निसमतां संप्राप्तिं विजयेषु च॥" क्रियाणामानुलोम्यं च करोत्यकुपितोऽनिलः। एवमेव चरके वायुरेव तन्त्रयन्त्रधरः सर्वेषां भावानामणुः। चराचरयोः प्राणः सर्वभावानां संघातविभागकारी सर्वचेष्टाप्रवर्तकः मनसः प्रणेता "अव्यक्तो व्यक्तकर्मा" चेत्यादिवचनाद्वायोः स्वातंत्र्यं पित्तकफयोस्तदधीनत्वं बोध्यते।

शिष्यः— यदि चैवंप्रभावगुणो वायुः पित्तकफौ च तदधीनौ तर्हि यथा पृथिव्याकाशौ दोषपक्षेन संगृहीतौ तथा परतंत्रत्वात् पित्तकफौ दोषसंज्ञां नार्हतः। यथा रसादिधातवो धारणाद्धातुसंज्ञकास्तथा पित्तकफावपि धातुसंज्ञया वक्तव्यौ। स्वतंत्रगत्यभावात् स्वयं कार्याणामभिनिष्पत्तौ नालं भवेतां। अतो वायुरेवैको दोषः शरीरवर्तिनः सर्वचेष्टाकरः तस्य वैषम्याद्रोगाणामुत्पत्तिः। वायौ स्वप्रमाणं नीते रोगाणामुपशमो भवतीति वक्तुमुक्तम्।

आचार्यः — अस्त्विदमलेयं विचिकित्सा। वायोर्द्वौ गुणौ शब्द-
स्पर्शश्च। नान्यो वायोर्गुणः "अनुष्णाशीतस्पर्शो हि द्रव्येषु वायु-
रिष्यते।" स यदा यदा येन येन द्रव्येण संगच्छते तदा तदा
तद्गुणभावमापद्यते। तेजसा युक्तो दाहं कुर्यात् शीतेन युक्तः
शीतत्वमेति, अत एव "योगवाहः परं वायुः संयोगादुभयार्थकृत्।
दाहकृत्तेजसा युक्तः शीतकृत्सोमसंश्रयात्॥" वातसंसृष्टे
पित्ते कफे वा पित्तस्य कफस्य च प्रतीकारेण वायुः प्रतिकृतो
भवति। तदेव संग्रहे चोक्तम् "ग्रैष्मः प्रायो मरुत्पित्ते वासंतः
कफमारुते। मरुतो योगवाहित्वात्" एवमनन्यसाधारणगुण-
कर्मशक्तयो दोषाः सन्ति। प्रकृतिविकृतिविज्ञाने चिकित्सायां च
तुल्यप्रयोजनत्वात् वातादीनां कार्यतस्तुल्यबलत्वमित्यनुमीयते।
वैधर्म्याश्रयाणां वातादीनां भिन्नाभिन्नोपयोगित्वेन प्राधान्यं*
समानमेव। पित्तकफयोस्तत इतो नयनमेव वायोः स्वातंत्र्यं, न
पित्तकफयोः* कार्यकरणे* ~~स्वातंत्र्यम्~~। यथा हि वायुरन्येषां
रसादिशुक्रान्तानां धातूनां मलानां च दूषयिता, तथापि पित्तकफा-
वपि विक्रियां गतौ तेषां दूषयितारौ। न तथा वायोर्लब्धगति-
प्रसरा अपि रसादयोऽन्यान् पित्तकफवत् दूषयितारः। तस्मात्
पित्तकफयोरपि अन्यदूषणधर्मेणास्ति दोषसंज्ञत्वम्
शिष्यः — अन्यच्चानुयुज्यते, यदुक्तं दोषाः सर्वदेहव्यापिनः
इति सा दोषाणां व्याप्तिः साम्येन वैषम्येण वा।

---

टीप *१ स्वस्वकार्याभिनिष्पत्तौ प्राधान्यं।
टीप* २ पित्तकार्यं कफकार्यं च।

आचार्यः- सर्वदेहव्यापिनोऽपि त्रिदोषा प्रकर्षेण त्रिषुस्थानेषु स्थिताः तदुक्तं संग्रहे "हृन्नाभ्योरधो मध्योर्ध्वं संश्रिताः" इति।

शिष्यः- आस्तामेतत्, अन्यदिदं पृच्छ्यते, यथा ~~[illegible]~~ दोषाणां त्रैविध्यं तथा रोगाणामपि त्रैविध्यमेव भाव्यं, तत्तु न दृश्यते। नानुभूयते। अनुभूयते तु सन्ति चापरिसंख्येया विकाराः, अपरिसंख्येयानि च तेषां प्रशमसाधनानि। चरके चापि यथा कारणानां बहुविधत्वं तथा रोगाणां चोक्तम् "एको हेतुरनेकस्य बहूनां बहवस्तथा। व्याधेरेकस्य बहवो" सुश्रुते च भूयांसो व्याधयो निगदितास्तद्यथा 'आदिबलप्रवृत्ताः (जन्मबलप्रवृत्ताः, दोषबलप्रवृत्ताः, संघातबलप्रवृत्ताः), कालबलप्रवृत्ताः, दैवबलप्रवृत्ताः स्वभावबलप्रवृत्ताः" तेऽपि च पुनः प्रत्येकं द्विधा भिद्यन्ते। तस्मात् केवलं शब्दप्रमाणमात्रेण न दोषाणां त्रैविध्यं मन्तुं युक्तं। शारीरमानसानां रोगाणां रोगहेतूनांच तत्साधनानांच विविधत्वे श्रूयमाणे दृश्यमाने अनुभूयमाने च सति न दोषाणां त्रैविध्यमेवेति निश्चेतुं युक्तम्।

आचार्यः- त्वया नाद्यां विसर्गेण प्रपंचितमिदं विकाराणां तद्धेतूनां साधनानांच नानात्वं वातपित्तश्लेष्मणो नातिवर्तते।

यदेतेषां नानात्वं दृश्यते तत्तु केवलं देशकालस्थानक्रियोपाधि-
मूलमेवास्ति। तत्सन्निदर्शनमुच्यते। आकाशस्य गुणः शब्द एको
भूत्वापि देशभेदेन कालभेदेन स्थानभेदेन क्रियाभेदेन नानात्व-
मुपयातः। शुककाककोकिलगजगवयसिंहादिप्राणिविशेषैः
वीणापणवमुरजसुषिरादिवाद्यविशेषैरुपत्यकाधित्यकासरस्तीरा-
दिस्थानविशेषैश्चापाततो नानात्मकतामुपगतोऽपि वस्तुतो
एकरूपत्वादेवैकेन शब्दमात्रग्राहकेण श्रोत्रेन्द्रियेणैव ज्ञायते।
तथा चैकविधोऽपि मुखवातः सुषिरगतः स नाभिच्छिद्रैर्निर्-
गतः निषादर्षभादीन् स्वरान् व्यंजयति। तथा स्पर्शोपाधि-
वशात् शीतोष्णमृदुपिच्छिलखरभेदेन पृथक्पृथगवभासते।
वालतालवंशबर्हिणां व्यंजनसमुद्भवो वायुः शरीरे गुणपरि-
णामेन बहुविधतां गच्छतीति प्रत्यक्षम्। एवमेवोपाधिभेदात्
एकमपि सत्तेजो विविधाभिस्ताभिस्ताभिः संज्ञाभिः ख्याप्यते।
तदेव मेघेन्धनं तेजो विद्युदित्युच्यते। नक्तं दिवमिति विभाग-
कारी तेजः सूर्य इत्याचक्षते। न्यायशास्त्रे च तेजसश्चतुर्विधो
विभागः कृतः, तद्यथा भौमं, दिव्यं, आकरजं, औदर्यं चेति

रूपं च तेजसो गुणः, तच्च व्यक्तिभेदेनात्मानं सहस्रधा विभजति
तत्तु स्पष्टमेव। तथा च जलमेकविधं सर्वं पतत्यैन्द्रं नभस्तस्तस्य
गुणो रसः, एकविधं जलं मधुराम्ललवणरसादिभेदेन तेषां द्विश-
स्त्रिशश्च तुच्छादिभेदेन च बहुविधतां गतं प्रत्यक्षं दृश्यते। एवं
भूरपि स्वगुणं शुण्ठीरामठपनसाम्रमालतीपाटलादु ~~[illegible]~~-
पाधिवशात् नानात्वेन नाटयति। एवमेव वातपित्तश्लेष्माणो देहे
देशकालस्थानक्रियावशात् नानारूपेण परिणमन्ति। युक्त-
रूपैश्च संशयः स्यात् यदि च यत्र कुत्रापि शरीरावयवाश्रिता-
नां दोषाणां स्वरूपगुणेभ्यः प्रच्युतिर्भवेत्, तथा तु न दृश्यते न च
श्रूयते। यत्र कुत्रापि शरीरगतस्य कुपिताकुपितस्य वृद्धस्य
क्षीणस्य वा विविधैर्विकारैर्वा परिणमतः सतोऽपि वायोः न स्वकस्वरूप-
परुषलाघवगतिमत्त्वादयो लुप्यन्ते (यां कामप्यवस्थां गतं वातं
रूक्षादयो गुणा न विजहति) एवमेव पित्तस्य कफस्य च गुणाः
न विजहति। तस्मादेव त्रिकालज्ञैर्महर्षिभिरिदं सिद्धान्तितम्
कृत्स्नं विकारजातं वातपित्तश्लेष्मणो नातिवर्तते, अत एवो-
पदिष्टमायुर्वेदे भिषजो लक्षणम् संचयं च प्रकोपं च, प्रसरं
स्थानसंश्रयं। व्यक्तिभेदं च यो वेत्ति दोषाणां स भवेद्भिषक्॥

तस्मादथ मायुर्वेदास्त्रिदोष विज्ञानेन सर्वेषामारोग्यशास्त्राणां मूर्धन्यतां गतः। एकमपि तंत्रं पूर्णत्वेनाभ्यस्यतो नेदमवगंतुं दुःशकम्

शिष्यः — यदुक्तमुपाधिवशाद्दोषा भिद्यंते इति, स तेषां स्थानतो गुणतः क्रियातो वा भेदः।

आचार्यः — न गुणतो भेदो दोषाणां संभवति। समवायसंबंधात् गुणिभ्यो गुणा नाभिद्यंते। स्थानभेदेन क्रियाभेदेन च भवंति दोषाणां भेदाः। दोषाः प्रत्येकं पंचधा भिद्यंते तत्क्रमेण व्याख्यास्यते। "भिद्यते वायुरेकोऽपि स्थाननामक्रियामयैः", (प्राणः, उदानः, व्यानः, समानः, अपानश्चेति) तच्चाष्टांगसंग्रहानुसारेण निगद्यते। "स्थानस्था मारुताः पंच, वर्तयन्ति शरीरिणम्"। एवमेव यजुर्वेदे तथा ऐतरेयछांदोग्यबृहदारण्यकादिषूपनिषत्सु गर्भोपनिषदि शारीरोपनिषदि च प्रकरणवशादेताभिरेव संज्ञाभिः पंच वायवो निरुक्ताः। योगशास्त्रे पंचानां वायूनां कार्याणि प्रयोजनपूर्वं विवेचितानि विस्तरभयान्नोपन्यस्यंते। प्राणो नाम मुखनासिकासंचारी हृदयवृत्तिः, प्रणयनात्प्राणः आहारेण पूरणं तस्यैव कर्म। उदानो नामोत्कर्षोर्ध्वगमनादिहेतुः पादतलमस्तक स्थानः

ऊर्ध्ववृत्तिः, । इंद्रियार्थानां धारणं तस्यैव कर्म "स्पंदनादूर्ध्व-
नयनादुदानो भण्यते बुधैः" । व्यानो नाम व्यायमनकर्मा व्यानः,
व्यायमनं नाम प्राणापानयोर्वियमनं [प्राणापानयोर्निय[illegible]
कार्यकारित्वहेतुः] प्राणापनयोः संधिस्थानीयो वीर्यवत्कर्महेतुश्च.
प्रस्पंदनं [शरीरचलनं] व्यानस्य कर्म "व्यानो व्यानयति
प्रायो रोगादीन्सर्वदेहगः ॥" समानो नाम भुक्तस्य पीतस्यच समं
नयनात् समानः कोष्ठस्थानोऽन्नपक्ताच; विवेकस्तस्य कर्म
(विवेकः - रसमूत्रपुरीषादीनां पृथक्करणं]

"पीतभक्षितमाघ्रातं रक्तपित्तकफादिच।
समं नयति गात्राणि समानस्तेन कथ्यते॥"

अपानो नाम मूत्रपुरीषादेरपनयनादपानः, अधोवृत्तिरानाभि-
स्थानः धारणं (शुक्रमूत्रादीनां वेगकाले प्रवर्तनमवेगकालेच
धारणमपानस्य कर्म) "मलमूत्रापनयनादपानः कथ्यते बुधैः।
अन् प्राणधारणे (जीवधारणे) एवं प्राणादीनां पंचानां वृत्ति-
विशेषाणां सामान्यभूता सामान्यदेहचेष्टाभिसंबंधिनी या.
वृत्तिः सैव प्राणशक्तिर्जीवनशक्तिरित्युच्यते। अस्मिन् शास्त्रे
प्राणशब्द उभयत्रैव प्रयुज्यते ......................

( मुखनासिकासंचारी वृत्तिः प्राणशब्देन संज्ञिता। शरीरधारण-भूता याजीवनहेतुः शक्तिः साऽपि प्राणशब्देनोच्यते) तद्भावेभावात् तदभावेचाभावात्॥"

एषां पंचानां प्राणादीनां वृत्तिविशेषाणां संख्येन्यानि कार्याणि, तानि क्रमशो व्याख्यायन्ते

यस्य प्रभावात् बुद्धिः स्वस्वकार्येभि नियतौ इंद्रियाणि प्र-बोधयति (प्रवर्तयतीत्यर्थः) यच्च देही ष्ठीवति, क्षौति, उद्गिरति, निश्वसिति उच्छ्वसिति, यच्च भुक्तमन्नं चर्वणादिक्रियया कंठ-नाडीपथेनामाशयं प्राप्नोति, इत्यादि क्रियाः यन्मूलाः स प्राणः (प्राण एतासां क्रियाणां कर्ता) सच शीर्षेरिः कर्णनासिकाक्षि-जिह्वाः समाश्रित्य स्थितश्चन्चरंति यथोक्तमष्टांगहृदये

" वायुः प्राणोऽत्र मूर्धगः, उरः कंठचरो बुद्धि हृदयेंद्रिय-चित्तधृक्। ष्ठीवनक्षवथूद्गारनिश्वासान्नप्रवेशकृत्, चरकेच प्राणवाहिस्रोतसां हृदयं मूलं महास्रोतश्च" एवं सर्ववाक्या-नां समन्वयात् एवं सिध्यति तद्यथा, आपादतल ~~मस्तके~~-मस्तकदेहस्यान्तर्बहिश्च शीतोष्णादीनां यत् संवेदनकार्यं तत्र प्राण एव हेतुः; प्राणे विकृते संवेदनकार्यं न भवति। ....

संवेदनाभावे प्राणो विक्रियां गत इत्यवगन्तव्यम्। यदायं
प्रकृतौ तिष्ठति तदा यथोक्तकार्यकारी भवति, यदा च विकृतिं
भजते तदा तान् तान् विकारानुपजनयति।

शिष्यः — कैः कारणैः प्राणो विकृतिं गच्छति।

आचार्यः — अत्याहारेणाभिघातेन रौक्ष्येण व्यायामेनातिमार्ग-
क्रमेण चानुदीर्णानां वेगानामुदीरणेनोदीर्णानां च विधारणेन
प्राणो विक्रियते तेन च नयन वदन श्रवण रसनाभितान् विका-
सनुपजनयति। तेजसमुपघातं च करोति, अन्यांश्च पीनसार्दि-
त तृट् श्वासकास हिक्कादीन् बहून् विकारान् करोति। हारीत-
संहितायां प्राणकोपात् संभूयमाना विकारा एव मुक्ताः

"शिरःशूलं कर्णशूलं शंखशूलमसृग्दरः। अधोन भेदकोचा-
न्यो दिनवृद्धिसमुद्भवः॥ नासिकोपद्रवश्चापि मन्यास्तंभो
हनुग्रहः॥ तं प्राणास्त गलोष्ठाद्याः षोडशैते शिरोगताः॥

गर्भाशयस्य बलाबलत्वं हि प्राणशक्तिमवलंब्य स्थितम्।

अथोदानः — उरःस्थानमुदानस्य नासानाभिगलांश्चरेत्।
वाक्प्रवृत्तिप्रयत्नोर्जाबलवर्णस्मृतिक्रियाः॥ यश्च पुरुषो
ब्रवीति यश्च वक्तुं प्रयतते तत्सर्वमुदानबलात् (वचन-
प्रसरणाः कीदृशाः तत्र बाल्ये कुमाराणां दृश्यते)

यच्च त्रिविधं बलमुक्तं सहजं कालजं युक्तिकृतं (व्यायामजं) च तत्रापि कारणमुदान एव। अथ्यावच्चयसत्युधाने बलनाशः। बल वृध्दिस्तु दूरापेता। प्रायेण प्राणायामप्रत्याहार यमनियमादिभि-रुदानो नित्यमविकृतो बलवान् भवति (स्वप्रकृतौ तिष्ठति) ये च शरीरस्य स्वाभाविकवर्णाः कथिताः 'पीतः गौरः कृष्णः पीत-गौरः सितासितश्चेत्येवमादयस्तेषां नित्यानुवृत्ति हेतुः। यदा च शरीरवर्णा विकृता दृश्यन्ते तदोदानो विकृत इति ज्ञातव्यम्। स्मृतिः (विनयज्ञानस्याविच्छेदः) अत्राप्युदान एव हेतुः। वाङ्-मात्रेण शृंगारवीरकरुणादयो रसाः प्रत्यक्षं भूयमाना इव अवभासन्ते। षड्जमध्यमधैवतादयश्च स्वरविशेषाः ओष्ठ्य-तालव्यह्रस्वदीर्घप्लुतमंद्रादयश्चाक्षरोच्चार विशेषाः वृक्षारोहणं उत्पतनमधित्यकागमनं, एतासु वाक्प्रयत्नादि तुंगप्रदेशा-रोहण क्रियासु च, यस्यां कस्यांचिदपि क्रियायां देहेन वाचा मनसा वा प्रवर्तितायां सत्यां तत्र या बुध्दे धैर्यस्य स्मृतेश्चा-व्यवच्छिन्नानुवृत्तिः स्वकार्याभिनिर्वर्तने इंद्रियाणामनिर्वेदः इत्येवमादीनि यस्मात्कारणात् भवन्ति सः उदानः (उपरिष्टात् उक्ताः) सर्वाः क्रिया अविकृता उदानाज्जायन्ते इत्यर्थः॥

शिष्यः – कैः कारणैरुदानो विक्रियते। यैः कारणैर्विकृत्यादीनि स्वकार्याणि न यथावदपि निर्वर्तयितुं दुःशकं भवन्ति तान्यपि जिज्ञास्यन्ते।

आचार्यः – छर्देः वमथोर्निद्रायाः श्वोद्गारस्य च निग्रहात्, शिरसि ग्रीवायां स्कंधयोर्नाभ्यां वक्षसि च गुरुभारधारणेनातिस्मितेन शोकरोदनातिशयेन, उच्चैर्भाषणेन गीतातिप्रसंगैरादिभिः, विविधैरंगविक्षेपैरुदानो विकृतिं गच्छति विकृतश्चायं कंठरोधं स्वरभ्रंशं मनोभ्रंशं (एकतानता विच्छेदं) अरोचकपीनसान् गलगंडं मालोपच्यर्बुदादीनूर्ध्वजत्रुगतांश्च विकारान् जनयति। यथोक्तेषु विकारेषु एकस्मिन्ननेकेषु वा विकारेषु जायमानेषु सत्सु निश्चिनुयादुदानो विकृत इति। आहारविहारदोषेणान्येन वा हेतुना व्याधिकर्षणेन वा यकृति प्लीह्नि वा विकृते उदानो विक्रियते। उदानो वा विकृतो यकृत्प्लीहानौ विक्रियां गमयति। तथा हारीतोक्ता विकाराः "हिक्का श्वासः परिश्वासः कासः शोषार्तिघंटिका। हृल्लासो हृदि शूलंच यकृद्रातादिकारतिः।। स्वरभेदो जृम्भणं चैव तथा वैस्वर्यपीनसौ।। अरुचिश्छर्दिरति श्यामो एते प्रोक्ता उदानतः।

तैलघृतादिभक्षणाद्धि वाक् विशदाभाषणे समर्था च भवति।
तैलघृतादिषु तेजसोंऽशः पार्थिवांशश्च विद्यते। तेन चैतत्सि-
द्धं भवति स्निग्धोष्णगुरुमधुरयोगादुदानविकृतयः प्रायेण
शाम्यंति।

व्यानो निरूप्यते :- 'व्यानो हृदि स्थितः कृत्स्न देहचारी महाजवः।'
गत्युत्क्षेपण प्रसारणाकुंचनोत्क्षेपण निमेषोन्मेषजृंभणान्नस्वादन-
स्त्रोतो विशोधन स्वेदासृक्~~स्रा~~वणादिक्रिया योनौ च शुक्रप्रतिपादनं
करोति। अन्नस्य किट्टात्सारं विभज्य तेन क्रमशो धातूनहरह-
स्तर्पयति। कृत्स्नदेहचरः (रसरुधिरादिप्रेरकः) तत्तद्धातुसमा-
श्रितेन तेन तेनाग्निना स्वेनोष्मणा यथावत्पच्यमानं तं तं
धातुं स्थूलसूक्ष्मसारमलरूपेति विभागेन विभजन् शुक्रांतानां
धातूनां रससंवहनेन (रसप्रापणेन) पोषको भवति। व्यानो-
ऽतिमात्राध्ययनातिचिंतनविहारातिशयनविषमचेष्टितैर्विरोधिभि-
र्भक्ष्यैः रौक्ष्यभीहर्षविषादाद्यैर्हेतुभिः कुपितः पुंस्त्वोपघात-
मुत्साहहानिं बलभ्रंशमनवस्थितत्वं चेतसः। "सर्वांगरोगा-
निस्तोदरोमहर्षांगसुप्तताः॥" कुष्ठविसर्पादीनन्यांश्च रस-
रुधिराश्रितान् सर्वांगगान् ~~वि~~ विकारानुपजनयति।-

(पुंस्त्वोपघातादिष्वन्यतमे कस्मिंश्चिदपि गदे जायमाने व्यानं विकृतं विद्यात्) हारीतोक्ता विकाराः "वक्ष्यामो व्यानकोपेन मारुतस्य प्रकोपणम्॥ व्यानः सर्वांगगो धातुविकारं कुरुते भृशम्। हृदिस्तंभः पृष्ठस्तंभ उरुस्तंभश्च गृध्रसी॥ एते व्यानप्रकोपेन जायन्ते। सुश्रुतोक्ता विकाराः "ज्वरातिसाररक्तपित्तादीन् विकारान् क्रुद्धो व्यानः कुरुते"।

समानो निरूप्यते "आमपक्वाशयचरः समानोऽग्निबलप्रदः। वक्ष्यमाणलक्षणस्य जाठराग्नेरीश्वरः॥ "समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वतः।" इत्यष्टांगहृदये "हृदि प्राणे गुदेऽपानः समानो नाभिमण्डले" इत्यन्ये। स पक्वामाशयदोषमलशुक्रार्तवांबुवहस्रोतोविचारी तेषां स्रोतसामाश्रयेणान्नधारणपाचनविवेचनकिट्टाधोनयनाद्यासु चेष्टा निर्वर्तयति। विधिनियमभुक्तस्यान्नस्य सारभूतो यथोक्तलक्षणो रसः समानप्रभावादेव निष्पद्यते। अन्यथा विनिष्पन्नो रसो न शुक्रान्तान् धातून् पोषयति। अंतरा एव क्षीयते। प्रथमम् ~~मेवाम~~ मलतामुपयाति। समानानिलाग्निबलाच्चयोत्पन्नस्य रसस्य प्रसारणमित्येव व्यानस्य कार्यं। न रसे सतो ~~दोषे~~ दोषान् गुणान् वा—

क्षपयितुमन्नतो वा जनयितुं क्षमते व्यानः। अतएवोक्तं रसे
या सकलशरीर पोषणशक्तिः सा समानबलावलंबिनी। वक्ष्यमाणैः
कारणैः समानो ~~[illegible]~~ वैषम्यमाप्नोति। तदुक्तं समानो विषमाजीर्ण-
शीतसंकीर्णभोजनैः॥ अकालकाले शयन जागराद्यैश्च दूषितः। शूल-
गुल्मग्रहण्यादीना~~म~~भ्यंतरमार्गजान् विकारान् कुरुते। करपाददाहः
शैत्यं सुप्तता वाड्व~~[illegible]~~मादयो विकारा नूनं समान दोषाज्जायंते। समान-
दोष*क्रिययैव ते शाम्यंति। अस्मिन्नर्थे भूय सांप्रधानां समन्वयः।
अपानो व्याख्यायते 'स्थूलांत्रस्य यावंतं प्रदेशं प्राप्तो मलः(पुरीषं)
बहिर्निर्गमनार्हो भवति। कारण विशेषात् मले बहिर्निर्गते सति
यत्रस्थो मलो रोगहेतुर्भवति तावन्मात्रात्स्थूलांत्रभागादारभ्य
श्रोणि अस्ति मेढ्रो ~~स्तन~~ व्याप्य स्थितः, याश्चापानवायो तिस्रो वलयः (अन्तर्धारिण्यः)
प्रवाहिणी, संवरणी, विसर्जनी-चेति संति तदुपरिष्टात् मुख्यं-
स्थानमपानस्य। स एव शुक्रं मलं मूत्रं गर्भं च बहिर्निर्गमयति
शिष्यः - कैर्हेतुभिरसौ विक्रियते
आचार्यः - 'अपानो रूक्षगुर्वन्न वेगाघातातिवाहनैः। यानयाना-
सनस्थान चंक्रमै श्चातिसेवितैः॥ विकृतः कुरुते रोगान् कृच्छ्रान्
पक्वाशयाश्रयान्। मूत्रशुक्रप्रदोषार्शो गुदभ्रंशादिकान् गदान्॥

---

टीप* समाने दूषिते यत्प्रतिक्रिया ~~म~~ तयाऽस्य.।
~~टीप * [illegible]~~

शुक्रदोषप्रमेहास्तु व्यानापानप्रकोपतः॥ तथाच हारीतोक्तः —
'भगंदरो बस्तिशूलं मेहार्शश्चातिकोष्ठकः। लिंगदोषो गुदभ्रंशस्त-
थान्यो गुदशूलकः॥ विड्रोधो मूत्ररोधश्चापानस्य प्रकोपतः॥
अयमत्र निष्कर्षः — यच्चोक्तं 'सर्वा हि चेष्टा वातेन स प्राणः प्राणि-
नां स्मृतः॥ विशेषाज्जीवितं प्राणे उदाने बलमुच्यते॥ स्थानस्था
मारुताः पंच वर्तयंति शरीरिणम्॥' एतदत्र प्रतिपादितं भवति
पंचसु स्थानस्थेषु वायुषु अविकृतेषु सत्सु पुरुषान् व्याधयो
नस्पृशंति। तस्मात् यथा ते न विक्रीयेरन् तथा कायवाक्चेतांसि
व्यापारणीयानि

शिष्यः — कथं व्यापारितानि कायवाक्चेतांसि सुखाय दुःखाय वा
भवेयुः।

आचार्यः — सर्वमिदं स्वस्थेभ्यो हितपरिणामि वृत्तं महर्षिभिरा-
युर्वेदे स्वस्थहितसमारम्भया धर्मशास्त्रे आचारसमारम्भयात्र
तत्र तत्र प्रसंगवशात्सर्वैरुपदिष्टम् "स्वस्थवृत्तं यथोद्दिष्टं
यः सम्यगुपतिष्ठति॥ स समाः शतमव्याधिरायुषा न वियुज्यते॥"
मनुः — आचारः प्रथमो धर्मो नृणां श्रेयस्करो महान्॥ आचारात्प्रा-
प्यते मैश्वर्यमाचारात्प्राप्यते सुखं॥ आचारः परमं ज्ञानं धर्माचारः
परंतपः॥

तस्मात्तु लौकिकाचारं मनसापि न लंघयेत् ।" पंचात्मानं मारुत-
माश्रित्य स्थिता प्राणिनां जीवनशक्ति विशेषतश्च प्राणे । यथोक्त-
हेतुभिर्दूषिते प्राणेऽन्ये चत्वारो दुष्यन्ति । पंचसु वातभेदेष्वयमेव
एक स्वयं विकृतः सर्वानन्यान्युगपद् विकुर्यात् । अपाने दुष्टे प्रथमं
समानो दुष्यति ततः प्राणादयः । समाने वैषम्यं गते प्राणापानौ
दुष्येते: व्यानो हि प्राणापानयोः संधिः (शृंखलावयवस्थानीयः)
एवं हि विमृश्यमाने एतत्सिद्धं स्थान-नामक्रियाभेदेन भिन्ना अपि
भिन्नकार्या भिन्नस्थाना भिन्ननामानोऽपि स्वस्वकार्यनिर्वर्तने
प्राणोदानादयः सर्वे परस्परमनुबध्नंति ।
शिष्यः — कतिच, एवंविधा विकाराः संति येषां वायुरेव को
हेतुर्भवति ।
आचार्यः — केवलेन वातेन भूयमाना विकारा उच्यन्ते: —
नखभेदः, विपादिका, पादशूलः, पादभ्रंशः, सुप्तपादता, वातखुड्डुका,
गुल्फग्रंथिः पिंडिकोद्वेष्टनं गृध्रसी जानुभेदः, जानुविश्लेषः, ऊरुस्तंभः,
ऊरुसादः, पांगुल्यं, गुदभ्रंशः, गुदार्तिः, वृषणोत्क्षेपः, शेफस्तंभः,
वंक्षणानाहः, श्रोणिभेदः, विड्भेदः, उदावर्तः, खंजत्वं, कुब्जत्वं, वामनत्वं,
त्रिकग्रहः, पृष्ठग्रहः, पार्श्वावमर्दः, उदरावेष्टः, हृन्मोहः, हृद्द्रवः, कृश

वक्षउपरोधः, बाहुशोषः, ग्रीवास्तंभः, मन्यास्तंभः, कंठोध्वंसः, हनु-
ताडः, ओष्ठभेदः, दंतभेदः, दंतशैथिल्यं, मूकत्वं, वाक्संगः मुखशोषः,
कषायास्यता, अरसज्ञता, अगंधज्ञता, घ्राणनाशः, कर्णशूलः,
अशब्दश्रवणं, उच्चैःश्रुतिः, बाधिर्यं, वर्त्मस्तंभः, वर्त्मसंकोचः तिमिरः
अक्षिशूलः, अक्षिव्युदासः, भ्रूव्युदासः, शंखभेदः, ललाटभेदः, शिरोरुक्
केशभूमिस्फुटनं, अर्दितं एकांगरोगः, सर्वांगरोगः, पक्षवधः,
आक्षेपकः, दंडकः, श्रमः, भ्रमः, वेपथुः, जृंभा, विषादः, अतिप्रलापः,
ग्लानिः, रौक्ष्यं, पारुष्यं, श्यावारुणावभासता, अस्वप्नः, अनवस्थितत्वं,
च्चेत्यशीतिर्वातविकाराः, वातविकाराणामपरिसंख्येयानामाविष्कृत-
तमा व्याख्याताः। सर्वेष्वपि खलु एतेषु वातविकारेषु ~~उक्तेषु~~ उ-
क्तेष्वन्येषु चानुक्तेषु वायोरिदमात्मरूपमपरिणामि कर्मणश्च
स्वलक्षणं अनुश्रुतो कामिदं यदुपलभ्य तदवयवं वा विमुक्तसंदेह
वातविकारमेवाध्यवस्यंति कुशलाः। तद्यथा रौक्ष्यं लाघवं वैशद्यं
शैत्यं गतिरमूर्तत्वं चेति वायोरात्मरूपाणि भवंति। एवंविध-
त्वाच्च कर्मणः स्वालक्षण्यमिदमस्य भवति। तं तं शरीरावयव-
माविशतः स्रंसभ्रंसव्याससंगभेदसादहर्षतर्षकंपवर्तचालतोद-
व्यथाचेष्टादीनि तथा खरपरुषविशदसुषिरारुणवर्ण

कषाय विरसमुख शोष शूल सुप्ति संकुंचन स्तंभन खंजतादीनि वायोः कर्माणि तैरन्वितं वातविकारमेनाध्यवस्येत्।

शिष्यः— अध्यवसितो भगवान् वायुर्भेदैः स्थान नाम ~~क्रिया~~-गुण कर्मभिरुपवर्णितः। अथेदानीं यत् पित्तमपि पंचात्मकमित्युक्तं तद्विस्तरतो जिज्ञास्यते

आचार्यः— तैजसत्वात्पचनादिक्रियया शरीरमनुगृह्णत् पित्तं स्थान क्रियोपाधि वशात् पंचधाभिधीयते तद्यथा पाचकं रंजकं — साधकं, आलोचकं, भ्राजकं, इति।

शिष्यः— कानि चैषां स्थानानि कार्याणि च.

आचार्यः— एषामेव पित्तविशेषाणां पाचकोऽग्निः, रंजकोऽग्निर्भ्राजकोऽग्निरित्यादि व्यपदेशः कृतः। आमाशयो हि पाचकपित्तस्य स्थानं तत्रस्थित्वा भुक्तस्य चतुर्विधस्याहारस्य पाचनात् पाचकाग्निरित्युच्यते।

शिष्यः— कस्तर्हि जाठरोऽग्निर्यस्य यत्र तत्रोपवर्ण्यते "जाठरो भगवानग्निः" सर्वात्मनो व्याप्तिं दर्शयता भगवता गीतासु-चोक्तम् "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। पचाम्यन्नं चतुर्विधम्" इत्यादि

उपनिषदि च, "देहमध्ये शिखिस्थानं त्रिकोणं मनुष्याणां चतु-
रस्रं चतुष्पदां षडस्रं विहंगमानामित्यादि। अन्यच्च "आग्निर्नारी-
राणांभुक्तं ज्वलनो नाभिमाश्रितः। मयूखैः पचते। शीघ्रं नानाव्यंजन-
संस्कृतम्॥ आयुर्वेदे च चतुर्विधोऽग्निर्जाठर इत्युक्तम्, मंदः, समः,
तीक्ष्णः, विषमश्चेति। जाठरस्य पाचकं पित्तमित्युक्तं भवद्भिः। कथ-
मत्र समन्वयो वाक्यानां, तद्विज्ञास्यते। किं पित्तव्यतिरिक्तोऽन्यो-
ऽग्निर्देहेऽस्ति पित्तमेवाग्निरिति।

आचार्यः— बाढं, अत्रोच्यते, न खलु पित्तव्यतिरेकादन्योऽग्नि-
रुपलभ्यते। आग्नेयत्वात्पित्ते दहनपचनादिषु अग्निवद्वर्तमानेऽग्नि-
वदुपचारः क्रियते। क्षीणे ह्यग्निगुणे तत्समानद्रव्योपयोगादतिवृद्धे
शीतक्रियोपयोगादागमाच्च पश्यामः 'न खलु पित्तव्यतिरेकादन्यो-
ऽग्निरिति। एतच्च विस्तराद्वक्ष्यामः। पाचकं हि पित्तं द्विविधस्वरूपं
द्रवमद्रवं चोभयरूपेणामाशये स्थितम्

शिष्यः— कथं द्रवरूपस्याद्रवरूपस्य च पित्तस्यैकमावस्थानं,
कथं च पाचकमित्येकैव संज्ञा।

आचार्यः— उभयोरपि पचनक्रियामन्तरेणानन्यकार्यत्वात्पाचक-
शब्देन व्यपदेशः कृतः, तदुक्तं भावप्रकाशे।

" पाचकं पचते भुक्तं शेषाग्निबलवर्धनं। रसमूत्रपुरीषाणि,
विवेचयति नित्यशः॥,, द्रवपदवरूपेणोभयविधस्य पाचकस्य पित्तस्य
पंचभूतात्मकत्वेऽपि तेजोगुणोत्कर्षात् द्रवापि न सौम्यगुणं त्यक्त द्रवस्व-
भावं [अत एवाद्रवरूपं) अत एव मूर्तं काठिन्यमेवं विधं
तत् नाभेर्वामतः किंचिदुपरिष्टात् हृदोऽधस्तात् स्थितं सहसह-
कारिकारणैर्वायुक्लेदादिभिः क्षुद्बोधनान्न पाचनादि क्रियां निर्वर्तयति।
स एवागमादनुमानादनुभवाद्युक्तितश्च जाठराग्निरित्युच्यते। योग-
तरंगिण्यां च "नाभेर्वामत ऊर्ध्वमीषदनलस्थानम्,, इत्यादि। तथाच
भावप्रकाशे "वामपार्श्वाश्रितं नाभेः किंचित्सोमस्य मण्डलम्॥
तन्मध्येऽग्निर्यथा स्थितः,, इत्यादि। अन्यच्च जरायुमात्रप्रच्छन्नः
काचकुप्यस्थदीपवत्॥ तच्च तेजोमयं पित्तं पित्तोष्मा यः स पक्तिमान्,,॥
तथाच चरके " आयुर्वर्णो बलं स्वास्थ्यमुत्साहोपचयौ प्रभा॥
ओजस्तेजोऽग्नयः प्राणाश्चोक्ता देहाग्निहेतुकाः॥ शान्तेऽग्नौ म्रियते युक्ते
चाग्नौ, अनामयो जीवति विकृतेऽग्नौ रोगी स्यात्। तस्मात् (अन्वय-
व्यतिरेकात्) आयुर्वर्णादीनामग्निर्मूलम् (प्रधानं कारणं) निश्चये-
नोच्यते। "एवं रसमलायान्नमाशयस्थमधः स्थितः॥ समाने-
नावधूतोऽग्निरुदर्यः पवनेन तु। पचत्यन्नं विभजते। इत्यादि,... —

अनेन नाभेर्वामभागेऽग्नेरेव स्थानं, तच्चामाशयाधस्तादिति च
सर्वेषां व्याख्यानां समन्वयात् सिद्धं भवति। पाको नाम भुक्तद्रव्येषु
पचनक्रियया रूपगुणान्तराधानम्। भुक्तान्नस्य यथाकालं सुखेन
जरणं जाठराग्नेः प्रकृतिस्थत्वं बोधयति। हीनगुणे चाग्नौ न
भुक्तान्नं यथाकालं पच्यते। भुक्तकालादारभ्य प्रहरद्वयं ~~पर्यन्तम्~~
यदन्नस्य सम्यक् पचनं स एव पचनस्य यथावत्कालः, अत एव
सामान्यतः "यामद्वयेन भोक्तव्यं यामयुग्मं न लंघयेत्॥", इति च
शास्त्रैर्भोजनकालस्य नियमः कृतः। अग्नौ हीनगुणे सति यथोक्त-
भोजनकालातिपातेऽपि नान्नं पच्यते। कारणवशात् वृद्धे चाग्नौ
भोजनकालादर्वागेव तीव्रा बुभुक्षा संजायते। अग्निसमान-
गुणानां चित्रकादिद्रव्याणामुपयोगात् जाठराग्निः प्रकृतिं गत्वा
भुक्तान्नं यथाकालं पचति। अतिवृद्धोऽग्निः शीतमधुरादिगुण-
विशिष्टैर्द्रव्यैरुपशाम्यति। शीतमधुरादयो गुणास्तीक्ष्णोष्णादय-
श्च गुणा अन्योन्यविरुद्धाः। मंदेऽग्नौ तीक्ष्णोष्णादिद्रव्याणा-
मुपयोगादतिप्रवृद्धेऽग्नौ च शीतमधुरादिद्रव्याणामुपयोगात्
यथोक्तलक्षणं पित्तमेवाग्निसंज्ञकमिति सिध्यति.....

प्रत्यक्षमनुभूयते चाग्नेरौष्ण्येन द्रव्याणां पाकः। उष्मणा स्वेदितानि फलानि मोचाम्रपनसादीनि, अकाले पक्वतामुपयान्ति। आमानां व्रणशोथादीनां सामकस्य कफस्य च स्वेदनेन परिपाको दृश्यते। सुस्निग्ध जलकर्षण बीजतुसंयोगात् सस्यानि भवन्ति। मध्यमंथन संयोगात् अग्निर्भवति। एवं पाच्य पाचकसंयोगात् पचनक्रिया भवति। चरके

"अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः।
मधुरात् प्राक् कफो भावात् फेनभूत उदीर्यते॥
परंतु पच्यमानस्य विदग्धस्याम्लभावतः।
आशयाच्च्यवमानस्य पित्तमच्छमुदीर्यते॥"

अष्टांगसंग्रहे "विधिवदभ्यवहृतमन्नजातं प्राणेन वायुना कोष्ठमाकृष्टं द्रवैर्विभिन्नसंघातं स्नेहेन मृदूकृतं समानेन संधुक्षितोऽग्निराशयस्थं (अन्नजातं) अंतराग्निः पचति। तत्तु सर्वमपि पच्यमानमादौ मधुरीभूतं कफं फेनीभूतमुदीरयति। ततो विदग्धमम्लीभूतमाशयाच्च्यवमानं स्वच्छं पित्तमुदीरयति। (आशयात् च्यवमानस्य पक्वाशयाभिमुखं गच्छतः सतो ग्रहण्यामुदीर्यमाणं यद्द्रवरूपं द्रव्यं तदेव पित्तम्)।

अग्निबलाधिष्ठानाद् ग्रहणी स्वबलेन पक्वाशयाभिमुखं च्यवमानमाहारं क्षणं संधार्य आहारच्युतिसमकालमेवोदीर्यमाणेन पित्तेन संमूर्च्छितमेवमद्रवद्रवरूपाभ्यामशेषं पचनकार्यं निर्वर्त्यते। येनच पचनकार्यं भवति तत् पाचकं पित्तम्। अस्यैव पित्तविशेषस्य सुश्रुते पाचकाग्निरिति संज्ञया निर्देशः कृतः। एवमद्रवद्रवरूपयोरामाशयस्थितयोः पित्तांशयोः (यकृतः पतत् द्रवरूपं पित्तं नाभेर्वामभागे स्थितमद्रवरूपं जठराग्निसंज्ञितं, (एतदुभयविधं) पचनक्रियैकोपयोगात् पाचकं पित्तमिति व्यपदेशः। संग्रहे चोक्तं 'ग्रहण्या बलमग्निर्हि स चापि ग्रहणीबलः। दूषितेऽग्नावतो दुष्टा ग्रहणी रोगकारिणी (जाठराग्नेर्यथावत्कार्याभावात् — ग्रहण्यां पचनोपयोगि द्रवं पित्तं न यथावदुदीर्यते) ग्रहण्यां दूषितायां जाठरोऽग्निर्विक्रियते। एवं द्रवाद्रवयोः पित्तविशेषयोरन्योन्यमुपकार्योपकारकभावात् यथोक्तलक्षणं पाचकं पित्तं "पचत्यन्नं विभजते सारकिट्टौ पृथक्तथा। तत्रस्थमेव पित्तानां शेषाणामप्यनुग्रहम् करोति बलदानेन। येन च भूताश्रयो धात्वग्नयश्च तेषां स्वस्वकार्यनिर्वर्तने बलमादधाति तदुक्तं चरके 'अन्नस्य पक्ता सर्वेषां पक्तॄणामधिको मतः"

शिष्यः — पाचके पित्ते विकृते सति के के विकाराः प्रायो जायन्ते।

आचार्यः — विकृते च विपाके न यथावद्रसास्वादं मारोग्यं च
लभन्ते प्राणिनः। "पाचकः कुपितः कुर्यादग्निमांद्यं तथा क्लमः।
अपाकः कुक्षिशूलं च अनुत्साहमरोचकम्॥ पीतत्वं रक्त-
मूत्रत्वं मलबंधं तथा सरः॥" द्रवाद्द्रवस्य परस्य पित्तस्यैव तत्
पारंपर्येण युगपद्विकृतिर्भवति। उभयोः प्रकृतिविकृतिभावो-
ऽन्योन्यापेक्षः।

रंजकः — रंजकं यकृत्प्लीहानं चाश्रित्य स्थितं सत् स्वाशय-
मागतमाहारपरिणामरसमुद्भवं रसं रंजयति तस्माद्रंजकम्
(स्वगतोष्मणा) रंजकोष्मणा च पच्यमानो रसो रक्तत्वमृच्छति
तदुक्तं भावप्रकाशे "यदा रसो यकृद्याति तत्र रंजकपित्ततः॥
रागं पाकं च संप्राप्य स भवेद्रक्तसंज्ञकः॥ सुश्रुतेऽपि "रंजिता-
स्तेजसा त्वापः शरीरस्थेन देहिनाम्॥ अव्यापन्नाः प्रसन्नेन —
रक्तमित्यभिधीयते॥" रंजकस्य बहिः स्फुरकार्यदर्शनाभाव
निदर्शनं कृतम्। रंजके विकृते सति यथोन्यमाना विकारा
जायन्ते "रंजकः सारतो धौन्य पाण्डुदाहत्वादिकान्। पित्त-
रोगान् यकृत्प्लीहगताननन्यांश्च सर्वशः।

अत्याशितस्य संक्षोभिणा यानयानादिचेष्टितेन व्याधिकर्ष-
णेनात्यध्वश्रमेणातिव्यवायव्यायामाभ्यां यकृत्प्लीहानौ विकृति-
माप्नुतः।

साधकं — यच्च हर्षोत्साहयोर्योनिः श्लेष्मजन्यतमोपनोद-
पूर्वं धर्मार्थकामादीन् पुरुषार्थान् स्वांश्चाभिप्रेतार्थान्साधयति
इति साधकं (पृथिव्यप्तमोरूपं। कफस्यापि पृथिव्यप्-
समुद्भवत्त्वात् तदालस्य मांद्यहेतुः। तच्च हृदयाश्रयं यस्यापक्षये
भीरनुत्साहो विषादश्चिन्ता मूर्च्छेत्यादयो भावा हृदयमाविशन्ति।
कामचिन्ताभयक्रोधाद्यैः क्षाराम्लतीक्ष्णोष्णादीनामतिसेवनेन
साधकं विक्रियते विकृतिश्च "साधको बुद्धिभ्रंशं तु अधैर्यं
भीति संभवं॥"

आलोचकः — तेजः कार्याणि विविधानि रूपाणि यच्च
विशेषेणालोचयति। (ज्ञापयति) तदालोचकं। तस्य-
स्थानं दृष्टिः। तदुक्तं सुश्रुते "तेजो दृष्टिरिति ख्यातं तेजः
शुक्रं प्रकीर्तितम्॥ तत्र दृष्टिगतं तेजः क्षाराम्लाभिष्यंदीनि
धृति (क्रमशो मंदतां नयति) अति भास्वरभैरवातिसूक्ष्म-
विकृतादिरूपाणां दर्शनाभ्यासेनकयोः केशलुंचनाच्चालोचकं
मांद्यं वैषम्यं वा (ह्रस्वदीर्घत्वं वा) गच्छति।

तद्विकृतं सदन्या वा विकृतीः कुर्यात्। दृष्टेर्विशेषेण श्लेष्मणो भयम्।
आलोचकं विकृतं सन्नेत्ररोगान् कुरुते।
अथ भ्राजकः— यच्च त्वचि स्थितं पित्तं सर्वाश्रयायाः प्रकाशयति।
विविधानां प्राणिनां विविधाः प्रभाश्च भ्राजयति तत् भ्राजकम्।
लेपाभ्यंगादियोजनं त्वक्पीडाकराणामनेकानां भावानां प्रतीकारसमर्थं।
यदा चन्यूनाधिकभावं गच्छति तदा त्वग्रोगान्कुरुते। अयमत्र निष्कर्षः—
यथा च बाह्ये सौरादि तेजसि दहनपचनप्रकाशनादयो गुणाः वर्तन्ते।
"पित्तं सस्नेहं तीक्ष्णोष्णं लघु विस्रं सरं द्रवम्" इति ये शरीरगतस्य
पित्तस्य गुणास्तेषु यः उष्णगुणः स सर्वशः शरीरान्तर्बहिर्व्याप्य-
स्थितः। ईषत्स्निग्धगुणं तीक्ष्णोष्णं द्रवरूपं पित्तं प्रकृति वर्तते।
औष्ण्यं रौक्ष्यं वैशद्यं लघुत्वमार्दवं पित्ते (जाठराग्नौ) वैशद्यलाघवगुणा-
वुष्णगुणानुगतौ। यथा स्वविकृतो वायुरुच्छ्वासनिःश्वासादिरूपेण गति-
मत्त्वधर्मेण कृत्स्नं शरीरं चेष्टयतेऽति यथा वायावन्यगतिधर्मस्तथैव
शरीरगतेऽविकृते पित्ते बाह्याभ्यंतरगतानां रोगबीजानां विध्वंसनरूपो
धर्मो भवति। वायोर्जलस्य देशस्य वा दोषात् समुद्भूतानि रोग-
नभसि
बीजानि प्रसर्पितुं दुर्दिने वावसरं लभन्ते। तपति च विभावसौ रोग-
बीजानि प्रसरावकाशं नैव लभन्ते। उतान्यथा क्षीयन्ते। ........

तथा यथोक्तगुणसमुदिते पित्तेऽविकृते सति न प्राणिनं रोगबीजानि प्रविशंति। प्रविष्टानि चेत् प्रतिहन्यन्ते भस्मसाद्भवन्ति। विकृतपित्तानां प्राणिनां शरीराणि वायुजलदेशकालदोषपरिणामोद्भवानां रोगबीजाना-मवसरं ददति। पंचमहाभूतविकारसंभवेऽपि देहे यो रोगबीजध्वंसको धर्मः स तेजस एव। एतदधिगतवन्तः सर्वमहर्षयस्तस्मिन् काले सवितारं रहस्यस्तुतिगर्भाभिरग्र्याभिर्वाग्भिरस्तुवन्।

शिष्यः— यथा च विकृतवातमात्रमूला विकाराः प्रागुक्तास्तथा पित्त-विकारा जिज्ञास्यन्ते।

आचार्यः— शृणु विकृतेन पित्तमात्रेण ये निर्दिश्यन्ते भूयमाना विकारास्त इमे "ओषः, प्लोषः, दाहः, दवथुः, धूमकः, अम्लकः, विदाहः, अंतर्दाहः अंगदाहः, ऊष्मण आधिक्यं, अतिस्वेदः, अंगस्वेदः, अंगगंधः, अंगावदरणं, शोणितक्लेदः, मांसक्लेदः, त्वग्दाहः, मांसदाहः, त्वङ्मांसावदरणं, चर्मदरणं, रक्तकोष्ठकाः रक्तपित्तं, रक्तमंडलानि, हरितत्वं हारिद्रत्वं, ~~[illegible]~~ नीलिका कक्ष्या कामला तिक्तास्यता, पूतिमुखता, तृष्णाया आधिक्यं, अतृप्तिः, आस्यविपाकः, मेढ्रपाकः, जीवादानं, तमःप्रवेशः, हरितहारिद्रनेत्रमूत्रवर्चस्त्वं चेति चत्वारिंशत् पित्तविकाराः, पित्तविकाराणामपरिसंख्येयानामाविष्कृततमा व्याख्याताः।

सर्वेष्वपि खल्वेतेषु, पित्तविकारेषु, अन्येषु चानुक्तेषु पित्तस्येद-
मात्म[illegible] रूपमपरिणामि कर्मणश्च स्वलक्षणं यदुपलभ्यते तद-
वयवं वा विमुक्तसंदेहा पित्तविकारमेवाध्यवस्यन्ति कुशलास्तद्यथा,
औष्ण्यं तैक्ष्ण्यं लाघवमनतिस्नेहो वर्णश्च शुक्लारुणवर्जो गंधश्च
विस्रो रसौ च कटुकाम्लौ पित्तस्यात्मरूपाण्येवं विधत्वाच्च कर्मण:
स्वलक्षण्यमिदमस्य भवति। तं तं शरीरावयवं, आविशतो दाहौ-
ष्ण्य पाकस्वेद क्लेद कोथ कंडूस्रावरागाः [illegible] यथास्वं च गंधवर्ण-
रसाभि निर्वर्तनं पित्तस्य कर्माणि; तैरन्वितं पित्तविकारमेवाध्यवस्येत्।
शिष्यः – भगवन् अपां सारमयः श्लेष्मा स्वप्रमाणावस्थितः स्नेहः
स्निग्धादिगुणैर्जीवन शक्तिं बृंहयन् पुरुषं दीर्घेण सुखमयेनायुषा
योजयति। एवंप्रभावस्य श्लेष्मणो भेदा गुणाः स्थानानि कार्याणि च
ज्ञातुमिच्छामि।

आचार्यः – श्लेष्मापि पंचविधः। स एवं क्लेदकः, अवलंबकः,
बोधकः, तर्पकः, श्लेषकः, इति। श्लेष्मा श्वेतो गुरुः स्निग्धः पिच्छिलः
शीत एव च॥ मधुरस्त्वविदग्धः स्यात् विदग्धो लवणः स्मृतः॥ तत्र
क्लेदक आमाशयस्योपरितनभागमाश्रितः। तदुक्तं. आमाशये
संभवति, श्लेष्मा मधुरशीतलः॥

स आत्मशक्त्या (माधुर्यपैच्छिल्यादिक्लेदित्वान्यैत्यात्) भुक्तं नानाविधमन्नं क्लेदयति (अन्नं विसंस्थुलतां नयति) तेनान्नं सुजरं भवति।

शिष्यः— कथमामाशयस्थः श्लेष्मा मधुरशीतलः कथञ्च तस्यामाशयस्योपरितनभागावस्थितिरनुमिता।

आचार्यः— तीक्ष्णोष्ण तिक्त कषाय क्षाररसप्रधानानां द्रव्याणामुपसेवनेन व्यायामजागरणादिनाच्च क्षीणश्लेष्मणां मारुतबलेनाग्निर्वृद्धो भूत्वा भुक्तमन्नं क्षणात् पचति। "यत्किंचिन्मधुरं स्निग्धं श्लेष्मलं गुरुभोजनं तत्सर्वमत्यग्नि हितं" एवमत्यग्नावुपक्रमः प्रोक्तः सः श्लेष्मणो मधुरशीतादिगुणवर्धनः। अनेनैवं सिध्यति 'श्लेष्मणो जाठराग्नेश्च गुणाः परस्परं विरुद्धास्तेनानुमीयते जाठराग्नेः प्रतिपक्षभूतः क्लेदक इति। अग्निः शरीरिणां भुक्तं ज्वलनो नाभिमाश्रितः। मयूखैः पचते क्षिप्रं नानाव्यंजनसंस्कृतम्॥" मयूखानां निरोध उपरितनभागोऽवस्थानेनैव निश्चीयते। अग्नेश्चोर्ध्वज्वलनं सार्वदृष्टम्। येषां प्राणिनां क्लेदकः क्षयमाप्नोति तेषामेव ~~[illegible]~~ जठराग्निस्तीव्रतां भस्मकसंज्ञतां वा प्राप्नोति। क्लेदकक्षयात् निर्निरोधाश्च जाठराग्नेर्मयूखा भवन्ति। अक्षीणश्च क्लेदकः शैत्यमधुरादिगुणयोगात् जाठराग्नेर्मयूखानां निरोधको (प्रतिबंधको) भवति। अनेन विमर्शनेन क्लेदकस्य विशेषतः आमाशयस्योपरितनभाग एवावस्थानं युक्तं प्रतिभाति। एवं यथोक्तलक्षणो यथोक्त—

स्थानान्स्थितः क्लेदको भुक्तस्यान्नस्य सुखजरणोपयोगित्वेना-
न्यानि श्लेष्मधामानि स्वस्वकार्यक्षमाणि करोति।

अथावलंबकः — स च वक्षसि स्थितः स आत्मवीर्येण (स्नेहवत्त्वया) त्रिकं (शिरोबाहुद्वय संधानं) अन्नवीर्याच्च सकलशरीरचेतनाधिष्ठानभूतं हृदयमवलंबयति [त्रिकस्य हृदयस्यचाश्रयं ददाति बलं ददातीति यावत्]। भुक्तमन्नं जाठराग्निना पच्यमानं त्रेधा विधीयते। त्रेधा विधीयमानस्यान्नस्य स्थविष्ठो भागः पुरीषं भवति मध्यमांशः स रसादिक्रमेण परिणम्य मांसं भवति। अणिष्ठो भागो हृदयं प्राप्य बलदो भवति (मनसश्चोपचयं करोति) यस्य च यथावस्थानात् हृदयं त्रिकं च स्वं स्वं कार्यमव्यवच्छेदेन यथा भवति तथा कुरुतः। अस्यापचयात् स्वमानावस्थितयोरपि व्यानसाधकयोः सतोर्हृदयं दौर्बल्यमावहति। लंघनेन कफे क्षीणे सति विशेषतो हृदयं ताम्यति। रसमाश्रितश्च कफोऽन्नरसद्वारेण हृदयं प्रीणयति। इतरेषां च कफधाम्नां बलदो भवति।

अथ बोधकः — बोधको जिह्वामूलकंठदेशस्थः षड्रसान् तेषां स्वगतभेदान् संसर्गांश्च रसनागतः सन् बोधयति। यदा च बोधकः क्षीणो वृद्धो वान्यदोषवृतो वा भवति तदा नयथावत् — रसान् ज्ञापयति।

अथतर्पकः — तर्पको मूर्धनि मस्तिष्कमाश्रित्य स्थितः ज्ञानेंद्रियाणि कर्मेंद्रियाणीच्च सततं स्नेहार्द्रभावेन योजयति। अतः स्नेहबलान्मेंद्रियाणि शृगानि मधिगच्छंति। स्नेहगुणभूयिष्ठस्तर्पकः, तस्मात् स्नायुशिरा कंडरास्त्रोतोजलानि मिलं स्निग्धानि भवंति। तस्यापक्षयात् शारीरगात्रेषु भावेषु रौक्ष्यं मुत्पद्यते (रौक्ष्यं मार्दवाभावः) वार्धक्येस्च स्नेहक्षया द्विशेषेण वपुः स्नक्षगुणेन वर्धते तेन वृध्दभावे वृध्दाः प्रायो निद्रां न लभन्ते गात्राणि कठिनीभवंति। भग्नानि स्नस्ता निवांगानि न शीघ्रं संधीयंते। बाल्ये स्नेहगुणोपचयात् भग्नं स्नस्तं भिन्नं दग्धं वांगं शीघ्रं संधीयते। तर्पकस्य यथावत्स्थानात् मनसः धान्यादयो गुणा न हीयन्ते।

अथश्लेषकः — श्लेषकस्तु चेष्टावदचेष्टावत्सु हृदयादृदयेषु च्चाष्टविधस्थेषु कोरोद्वखल सामुद्गप्रतरतुन्न सेवनीवायसतुंड मंडल-शंखावर्ताकारेषु तथाच पेशीस्नायुशीरादिगतानां येषां संधीनां संख्या नाविद्यते तेषुच्च स्थित यस्यावस्थानात् संधीनां प्रसरणाकुंचनोत्क्षेपणावक्षेपणादिरूपं शारीरंकर्म निष्पद्यते यस्मिंश्च क्षीणे वृध्दे दुष्टे वा संधीनां प्रसरणादिकं नभवति दोषाणां धातूनांच्च स्थानांतरगमनं न स्यात्।

शिष्यः – पंचसु क्लेदकादिषु विकृतेषु प्रायः के के विकारा जायंते।

आचार्यः – क्षीणेच क्लेदके भुक्त्वा न शांति माधिगच्छति नान्नं सुखेन पच्यते विदग्धतां वा गच्छति। वृध्देच तस्मिन् न काले क्षुदुद्बोधो जायते भुक्त्वाच शरीरं गौरवमापद्यते, तंद्राग्निनिद्राधी मांद्यादीनामाविर्भावो भवति। 'अपोषणंच सर्वेषु कुर्यात्क्षुद्धोऽवलंबकः॥ विकृतो बोधको रसनाश्रितोऽपि न रसज्ञानं जनयति। "लालास्रावातिस्रावौ वा लालादोषांश्च कारयेत्॥" "तर्पकोऽस्नेहनं कुर्यात् शिरःशोषं भ्रमं तथा॥ नेत्ररोगान् शिरस्तापं शिरोरोगान् शिरोग्रहम्॥" तिक्तोष्णादीनामुत्युपयोगात् बुध्दिपूर्वमबुध्दिपूर्वं वा रेतसोऽतिक्षयात् कामचिंताभयक्रोध-शोकैस्तर्पको विकृतिं भजते (तर्पकविकृतिर्नाम स्नेहभावाल्पत्वं) "श्लेष्मकः संधिशोषंच गतिनाशंच वेदनां विकृतः करोति।"

शिष्यः – सामान्यतः कतिधा श्लेष्मविकाराः सन्ति ताञ्ज्ञास्यते काश्चिच्च कर्माणि, तदपि।

आचार्यः – सामान्यतः श्लेष्मविकारा वक्ष्यन्ते। तद्यथा तृप्तिः, तंद्रा, निद्राधिक्यं, श्लेष्मोद्गिरणं, मलाधिक्यं . . . .

बलासको, हृदयावलेपः, स्तैमित्यं, मुखस्रावो, गुरुगात्रता
मुखमाधुर्यं, आलस्यं, कंठोपलेपः, धमनीप्रतिचयो, गलगंडः
अतिस्थौल्यं, शीताग्नितोदर्दः, श्वेतावभासता च श्वेतमूत्रनेत्रवर्चस्त्वं,
चेति विंशतिः। श्लेष्मविकाराणामपरिसंख्येयानामाविष्कृततमा
व्याख्याताः। सर्वेष्वपि तु खल्वेतेषु श्लेष्मविकारेषु, अन्येषु चा-
नुक्तेषु कफस्येदमात्मरूप परिणामि कर्मणश्च स्वलक्षणं यदुप-
लभ्य तदवयवं वा विमुक्तसंदेहाः श्लेष्मविकारमेवाध्यवस्यंति
कुशलाः। तद्यथा स्नेहशैत्य शौक्ल्य गौरव माधुर्य मसृणत्वानि
श्लेष्मण आत्मरूपाणि। एवं विधत्वाच्च कर्मणः ~~[illegible]~~ अस्य
स्वालक्षण्यमिदं भवति। तं तं शरीरावयवमाविशत श्वैत्यशैत्य-
कंडू स्थैर्य गौरव स्नेह स्तंभ सुप्ति क्लेदोपदेह बंध माधुर्य चिरत्वानि
श्लेष्मणः कर्माणि, तैरन्वितं श्लेष्मविकारमेवाध्यवस्येत्।
एवमयं स्थाननानाक्रियाभेदेन यथोक्तस्वलक्षणकर्मा श्लेष्मा
स्वगुणेषु स्नेहेनैकेन गुणेनाखिलं देहमंतर्बहिश्च व्याप्यास्थितः।
स्नेहो हि जीवनशक्तेः संतानानुवृत्तिहेतुः। यथा स्वगुणोपपन्नोऽपि
स्नेहास्वनभ्यक्तः शीघ्रं क्षीयते यथा च स्नेहाभावात् दीपज्योतिषोऽ-
नुवृत्तिः। एवं स्नेहाभावाच्छरीरमंतरा व्यसनमाप्नुयात्। . . . .

अतश्चोक्तं चरके सुश्रुतेन "स्नेहो हि प्राणिनां प्राणः," "प्राणाश्च स्नेहभूयिष्ठाः" पंचकर्मण्यपि स्नेहस्वेदपूर्वकमेव प्रयोक्तुमुपदिष्टान्यायुर्वेदे। दिनचर्यायांच "शिरःश्रवणपादेषु तं विशेषेण शीलयेत्। भोजनविधौच प्रथमं स्निग्धमश्नीयात् इत्यादि। स्नेहगुणभूयिष्ठत्वादेन क्षीरं जीवनीयानां श्रेष्ठं मांसं बृंहणीयानां श्रेष्ठं मधुररसो रक्तवर्धनानां श्रेष्ठः। एवं यानि यानिच स्नेहभूयिष्ठानि द्रव्याणि तानिच प्रायो बृंहणीयानि। एवं स्नेहगुणस्य श्लेष्मणश्चान्योन्यं व्याप्यव्यापक संबंधः। नालं स्नेहस्नानि र्घ्रस्य शमायालं सुगुरपि, येचान्ये श्लेष्मणो गुणास्ते सर्वे स्नेहानुगाः। एवमयं यथोक्तगुणैर्कर्मनाम लक्षणः श्लेष्मा तांस्तान् शरीरावयवानाश्रित्यावस्थितः (न्यूनाधिक— भावहीनः शरीरस्यास्थ्यमनुवर्तयति। श्लेष्मारसतो मधुरो लवणश्चेति यदुक्तं तद्विविच्यते। अविकृतो तथ्यो वा श्लेष्मा मधुरं रसं भावयति। यदा विकृतेन पित्तोष्मणा संसृज्यते तदा श्लेष्मा लवणं रसं [redacted] भावयति। इदमेव (लवणत्वमेव) श्लेष्मणो विदग्धत्वं सामर्थ्य श्लेष्मा तंतुमान् "मधुरस्त्वविदग्धस्यात् विदग्धो लवणः स्मृतः॥" .... ... —— ——

यदा च श्लेष्मगुणभूयिष्ठान् दोषान् धमन्यो वहन्ति तदा पित्तवातयोः पीतारुणा वर्णास्तिरोहिता भवन्ति। धमन्यश्च गौर्यःस्थिराश्च भवन्ति।

वायोः पित्तस्य कफस्य च प्रत्येकशः पंच पंच भेदा यथा-शास्त्रमुपवर्णिताः। एतेषामन्यतमे विकृते न देही स्वास्थ्यं लभते। क्लेदके विकृते न पाचकं पित्तं समानमरुच्च यथा-वदन्नं पक्तुं नालं। एवं च पाचके समाने वा विकृते इतरौ पचनक्रियां न यथावत्कर्तुं क्षमौ। साधके विकृतेऽवलंबक-व्यानौ, व्याने विकृते साधकावलंबकौ, इत्येवं सर्वत्रो-दाहार्यम्।

एवं त्रिकालज्ञैर्महर्षिभिः श्रीमदुपतापरहितैः प्रणीतेभ्यस्तंत्रेभ्य-स्त्रिदोषविज्ञानं यथाबुद्धिप्रसरं सारतः समुच्चित्य त्वामु-पादिशम्। न केवलं शारीरमानमधिकृत्य दोषत्रयमुपदिष्ट-मायुर्वेदे। किंचौषधान्नविहाराचारविचाराणां च हिताहितत्वं त्रिदोषविज्ञानमधिकृत्य प्रवर्तते। अन्यच्च शंकरमहामुनि-भगवत्पूज्यपादादिभिः प्रणीतेषु भाष्येषु भगवता बादरा-यणेन च प्रणीतेषु महाभारतविष्णुपुराणादिषु निदर्शनत्वेनो-पन्यासो वातपित्तश्लेष्मणाम् कृतो दृश्यते ..........

एवमेवञ्च सौर ब्रह्म वैवर्ताग्निपुराणादिषु योगवासिष्ठेञ्च त्रिदोषाणां निदर्शनत्वेनोपन्यासः कृतः। योगशास्त्रे विकृतानां त्रिदोषाणां प्रकृतिस्थापनार्थं विविधाः प्रयोगा दृश्यन्ते। एवमिदं त्रिदोषविज्ञानं तत्वतोऽनभ्यस्तार्य ग्रंथानां पाश्चात्य विद्या-व्यासंगेन क्षपित भ्रमिष्णायुषां परप्रज्ञानुपातिनां आक्षेपं नार्हति। जितेन्द्रियाणां शीत्युष्णताप रहितानां नीरजस्तमसां महर्षीणाञ्च परप्रज्ञानुपातिनां मानमोहाहंकार कामादिभि र्विलुण्ठित-मनसां विदुषांच ज्ञाने सुमहदंतरं स्यात्। यथाचार्वाकमतानां जनानां बलेन पूर्वेषां पूर्वतरेषांच बलं नानुमातुं न तुलयितुं शक्यं भवेत्। यथास्माकं पूर्वेषांच बलतो महदन्तरं तावदेव ज्ञानतोऽपि विद्यते। अत्रैवं न मन्तव्यं ज्ञानस्य भावाभावे न्यूनाधिक्येवा बलवत्वं दुर्बलवत्वंञ्च कारणमिति यथाच पंचभूतात्मकस्य ~~च~~ चराचरस्य जगतो हिताहितत्वं सोमसूर्यानिलेषु त्रिषु प्रतिष्ठितं तथाच देहिनां स्वास्थ्यं अ-स्वास्थ्यंच दोषत्रये ~~[illegible]~~ प्रतिष्ठितम्। उपरिष्टात् प्रतिपा-दितस्यार्थस्य तत्वतः प्रतिपादकानि श्रुतिस्मृतिभारत-पुराणादिग्रंथोक्तानि वाक्यानि पुरस्तादुपन्यस्येरन्।

शिष्यः— भगवन्। एते त्रयो दोषाः सर्वं देहं साम्येन व्याप्नुवन्ति वैषम्येणैकदेशेन वा।

आचार्यः— न ते गुणानां साम्येन सर्वदेहव्यापिनः [सर्वदेहव्यापिनामपि दोषाणां सन्ति विशिष्टस्थानानि। तत्र वायुः पक्वाशये कटौ सक्थनि श्रोत्रेऽस्थनि स्पर्शनेन्द्रिये (त्वचि) तत्रापि भूयिष्ठैर्गुणैर्वायुः पक्वाशये स्थितः। तथा पित्तं नाभावामाशये स्वेदे लसीकायां रुधिरे रसे च बाहुल्येन नाभौ स्थितम् [नाभेः सान्निध्यं समन्ततो दक्षिणतश्च। द्रवरूपेण द्रवरूपेण च स्थानस्थितम्) कफः उरसि कण्ठे शिरसि क्लोम्नि पर्वस्वामाशये रसे च स्थितः। तत्रापि विशेषेणोरसि चास्थितः। तत्रस्थ एव सर्वेषां कफस्थानानां बलमादधाति। सर्वधातूनां मध्ये वायुर्भूयिष्ठैः स्वगुणैरस्थनि स्थितः। अन्यत्र विशेषेण गतिमत्त्वेन। पित्तं चौष्ण्याधिक्येन रक्ते स्थितं। स्वेदे द्रवोष्णधर्मेण रसे चोष्णधर्मेण; वात इतरेभ्यो धातुभ्यो विशेषत रसे रक्ते च स्यन्दनधर्मेणावस्थितः। पित्तं मले सरत्वेन मूत्रे चौष्ण्येन, श्लेष्मा रसे स्वादुशीतत्व स्निग्धत्वादिगुणैः मांसे ~~स्निग्ध~~ स्निग्धगौरव मधुरगुणैः मेदसि स्नेहगौरवाभ्यां, मज्ज्ञि स्निग्धगुणेन शुक्रे सर्वगुणैर्मूत्रे द्रवरूपेण विदग्धरूपेण (क्षारधर्मेण)। मले गौरवगुणेन द्रवेण च स्थितः। भुक्तान्नस्य यत्किट्टं (मलरूपं) तत्रापि दोषाणां स्वास्थ्यास्वास्थ्यानुरूपा वर्णा भवन्ति। वातेन कृष्णमरुणं कृष्णारुणं रूक्षं च किट्टं भवति। पित्तेन पीतवर्णमरुणं पीतारुणं वा श्लेष्मणा—

श्वेतवर्णं किन्तु, अफेनं श्वेतवर्णं रौक्ष्यशैत्यगुणतो जायते वातेन।
शिष्यः— दोषाः सर्वशरीरव्यापिन इति भवद्भिः सिद्धांतितं तत्तु युक्तिरूपमपि तत्रायं संशयो, वैषम्यं गता दोषा रोगहेतव इति चेत्तर्हि कथं सुश्रुते चरके च रसजा व्याधयो रक्तजा व्याधयो मांसजा मेदोजा इत्यादि निर्देशः कृतः, ननु व्याधीनां दोषसंभवत्वेन निष्प्रयोजनं स्यात्।

आचार्यः— वत्स। यथा च दोषाणां सर्वशरीरचरत्वं संदेहशून्यमेवमेव सर्वरोगैकहेतुत्वमपि निःसंदेहं तदुच्यते यथायं रसजोऽयं व्याधिः रक्तजोऽयं मांसजोऽयं इत्यादि निर्देशः कृतो दृश्यते स तु केवलं चिकित्सासौकर्याय तदुक्तं संग्रहे "रसादिस्थेषु दोषेषु व्याधयः संभवन्ति ये। तज्जानित्युपचारेण तानाहुर्घृतदाहवत्॥" यदा च केवलं रसमेव दोषा दूषयन्ति तदा- अश्रद्धारोचकाविपाकाङ्गमर्दज्वरहृल्लासतृप्तिगौरवहृत्पाण्डुरोगमार्गोपरोधकार्श्यवैरस्याङ्गसादाकालवलीपलितदर्शनप्रभृतयो रसदोषजा विकारा धातुविशेषेण व्याधीनां निर्देशस्येदं प्रयोजनमुक्तं चरके "रसजानां विकाराणां सर्वं लंघनमौषधम्॥" दोषैर्दूषिते च रक्ते कुष्ठविसर्पपिडकास्रा—

नपित्तास्वृग्दर वातशोणित गुल्म-विद्रधि प्लीहादयः। " कुर्यात् शोणित-रोगेषु रक्तपित्तहरीं क्रियाम्॥ विरेकमुपवासं वा स्रावणं शोणितस्य वा॥ एवमेव मांसजादयः शुक्रांतव्याधयः। तेषां धातुभेदेनोपक्रमश्च तत्र तत्र प्रकरणे सुश्रुते चरकेन्चोपदिष्टः। धातुसंज्ञया निर्दिष्टान् व्याधीन् तत्तद्दोष लक्षण कार्यानुसारेण व्याध्यनुरूपा चिकित्सा प्रयोक्तव्या सा विस्तरभयान्नोच्यते। मेदोजानां चिकित्सितं अष्टौ निंदितकेऽध्याये चरके विस्तरेणोक्तं। " आस्थिजानां व्याधीनां पंचकर्माणि यथायोग्यं यथादोषंच बस्तयस्तिक्तकोपहितानि क्षीर-सर्पींषि। मज्जशुक्रजानां स्वादुतिक्तकम्। एवमयं रसादि धातूनां दोषाणांच दूष्य दूषक संबंधः।

शिष्यः— "अग्नि दोषान्मनुष्याणां रोगसंघाः पृथग्विधाः॥" इत्युक्तं तेन जाम्यग्नि दोषादेव रोगसंभवश्च्येत् कथं वात पित्त कफा रोग-मूलमित्युच्यते। "बलमारोग्यमायुश्च प्राणाश्चाग्नौ प्रतिष्ठिताः॥ अन्नपानेंधनैश्चाग्निर्ज्वलति व्येति चान्यथा। तस्मात् हिताहारो-पयोगादेव प्राणिनो न व्याधिमंतो भवेयुर्हिताहारेणाग्निः कर्हिचित् न विक्रियेत। तदुक्तं " आहारसंभवो देहो रोगाश्चाहार संभवाः॥" हिताहारमुपभुंजानानां नाग्निर्दूष्येत् तेनन्च न व्याधि भयं स्यात् इति सिध्यति।

आचार्यः- तात! अहिताहारोपयोग एव व्याधीनां निमित्तं नान्य-
दिति यन्मन्यसे तदज्ञानमूलं॥ न केवलं हिताहारोपयोगादेव
व्याधिभयमपगतप्रायं भवति। संत्यन्ये बहवो व्याधिहेतवो यै-
र्हिताहारमुपभुंजाना अपि व्याधिमंतो दृश्यन्ते। तानी-
मानि कारणानि 'कालविपर्ययः प्रज्ञापराधोऽसात्म्येंद्रियार्थ-
संयोगः। तथाच प्राणिनां न समाः प्रकृतयस्ताश्च दोषकाल-
भेदेन भिन्ना भिन्ना भवंति। चरके चान्याः प्रकृतयो निदर्शिताः।
तत्र प्रकृतिर्जाति प्रसक्ता, कुलप्रसक्ता, देशानुपातिनी,
कालानुपातिनी, वयोनुपातिनी, प्रत्यात्मनियतेति। एवं प्रकृतीनां
बहुविधत्वात्तेषामेकविधा जाठराग्नयः। येच समानाग्नयः
प्राणिनस्त एव भुक्तमाहारं यथाकालं सम्यक्पचंति। समा-
ग्नीनामपि ईर्ष्यया भयेन क्रोधेन शोकेन कामेन आकुल-
मतीनां हितमप्यन्नं नसुखेन पच्यते। अन्यच्च नहि द्रव्यमे-
कांततो हितमहितं वा भवति। कदाचिदहितमिति समाख्यातं
देशतः संयोगतः कालतश्च हितावहं स्यात्। हितमपि द्रव्य-
मेवमेव देशसंयोगकालप्रभृति भेदेन हितावहं स्यात्। यथा
दोषभेदेन प्रकृतयो भिन्नाभिन्नास्तथाऽग्नयोऽपि भिन्नाभिन्नाः।

अत एवाचार्यैरग्निदोषप्रकृतिविचारेण चतुर्विधा अग्नय इति सिद्धान्तितम्। वातप्रकृतीनां विषमोऽग्निर्भवति पित्तप्रकृतीनां तीक्ष्णः समप्रकृतीनां प्रकृतीनां समः, कफप्रकृतीनां मंदः, आग्निर्भवति, इति।

शिष्यः — कैर्लक्षणैरयं विषमोऽयं तीक्ष्णोऽयं मंदोऽयं समोऽयमिति विज्ञेयम्।

आचार्यः — उच्यते "विषमोऽसम्यगप्याशु सम्यक्चापि चिरात् पचेत्"॥ यस्यां कस्यामप्यवस्थायां लक्षणानां नियतत्वेन वायोः कार्यमिति जानीयात्। विषमाग्निं स्निग्धाम्ललवणप्रधानेनोपक्रमेण प्रतिकुर्वीत। कुत इति चेदुच्यते, वातप्रकृतीनां जागरचिंताकामादिकारणैर्विषमशीतरूक्षशीताद्याहारोपयोगाद्ग्निर्विषमो भवति। पित्तप्रकृतीनामग्नयः प्रायस्तीक्ष्णा भवन्ति। पित्ताधिकप्रकृतावामाशयस्थश्लेष्मणः शैत्यगौरवादिगुणानां हीनत्वादग्निशक्तिर्बलीयसी भवति। "तीक्ष्णो वह्निः पचेच्छीघ्रमसम्यगपि भोजनम्॥" गुरु लघु पथ्यमपथ्यं मात्राधिकं वा सर्वमक्लेशेन पचति। तीक्ष्णाग्नयः पुरुषाः क्षुधां क्षणमपि न सहन्ते। तीक्ष्णाग्निः सोढश्चेत् क्षुधाक्लेशाय भवति।

मधुरस्निग्धशीतगौरवगुणानि द्रव्याणि तीक्ष्णाग्नौ हिताय
हिताय भवन्ति। तेन तीक्ष्णाग्नेः पित्तप्रकृतिकत्वं बोध्यते।
विषम विपरीतलक्षणः समः; यथाकालत्वेनाप्यपचारेण
विक्रियतेऽनपचारात् प्रकृतावनुपतिष्ठते "यः पचेत्सम्यगे-
वान्नं भुक्तं सम्यक् समस्त्वसौ॥" स्वास्थ्याय यस्य दोषस्य
यन्मानमपेक्षितं तत्तन्मानमवस्थिता दोषाः समा इत्युच्यन्ते।
समवातपित्तश्लेष्मणां समा भवन्त्यग्नयः। तीक्ष्णविपरीत-
लक्षणो मन्दः। मन्दाग्नयः प्राणिनो हि क्षुधानिग्रहात् भोजन-
कालमपहाय ये न खादन्ति। श्लेष्मप्रकृतयः प्रायो मन्दाग्नयो भवन्ति।
मन्दाग्नौ त्रिकटुकचित्रकरामठादितीक्ष्णतिक्तादिद्रव्याणामुपयो-
गान्मन्दोऽग्निः श्लेष्मप्रकृतिक इति स्पष्टम्। ये च भूताग्नयः
पञ्च, धात्वग्नयः सप्तचोक्तास्ते सर्वे चतुर्विधाग्नीनां स्थिति-
मनुसृत्य वर्तन्ते। शारीरमानं गतानां भूतधात्वग्नीनां ये
पाचकांशास्तेषां मान्द्यात् साम्यात्तैक्ष्ण्याद्वैषम्यात्तु धातूनां
वृद्धिक्षयौ भवतः। द्वादशविधाग्नीनां पाचकांशानां मान्द्यं
साम्यं तैक्ष्ण्यं वैषम्यं जाठराग्निमनुक्रमेव। एवं दोषाणां
जाठराग्नेश्चान्योन्यं कार्यकारणसंबन्धः।

शिष्यः— यच्च प्रकृतिभेदेनाग्निभेदः कोष्ठभेदश्च भवतीति कथितं,
तत्रेदं जिज्ञास्यते कतिधा प्रकृतयः संतीति

आचार्यः— सामान्यतश्चतुर्विधाः प्रकृतयः संति प्राणिनां, तदुक्तं संग्रहे
"शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः॥ प्रकृतिर्जायते तेन"
भुक्तश्चाहारः पुरुषाणां स्त्रीणां च मासेन शुक्रत्वमार्तवत्वं (बीज-
शोणितत्वं) याति। पुमान् स्त्री वा यादृगाहार विहारपरो स्यात्तां
तादृग्विधे (द्रव्यानुगुणधर्मविशिष्टे) शुक्रशोणिते जायेते। वात-
वृद्धिकरैराहारविहारैर्वातात्मके शुक्रशोणिते। पित्तवृद्धिकरैः पित्ता-
त्मके, कफवृद्धिकरैः कफात्मके संसृष्टकारणैः संसृष्टरूपे समैः
कारणैः समवातपित्तकफात्मके शुक्रशोणिते संभवतः। शुक्रशोणि-
तयोर्यो दोषो बलवानेको द्वौ वा त्रयो वा, तत्तद्दोषसंज्ञका प्रकृति-
र्भवति। सर्वासु प्रकृतिषु द्वंद्वजाः प्रकृतयोऽवरा एकदोषात्मिका
मध्यमाः समदोषात्मिका उत्तमास्ताश्च लक्षणशो वक्ष्यन्ते।

प्रायस्त एव पवनाध्युषिता मनुष्या दोषात्मकाः स्फुटितधूसर-
केशगात्राः। शीतद्विषश्चलधृतिस्मृतिबुद्धिचेष्टाः सौहार्ददृष्टि-
गतयोऽतिबहुप्रलापाः॥ . . . . . . . . . . . . . . . . . . . . .

अल्पपित्तबलजीवितनिद्राः सन्नसक्तचलजर्जरवाचः।
नास्तिका बहुभुजः सविलासा गीतहासमृगयाकलिलोलाः॥
मधुराम्लपटूष्णसात्म्यकांक्षाः कृशदीर्घाकृतयः सशब्दयाताः॥
नदृढा नजितेंद्रियाः नचार्या नच कांता दयिताबहुप्रजावा॥

येचैवं मारुतप्रकृतय उक्तास्तेच कदाचिद्वायोः सर्वैर्गुणैः कदाचित् एकेन द्वाभ्यां बहुभिर्वा गुणैर्युक्ता भवंति। एवमेव पित्तप्रकृतयः श्लेष्मप्रकृतयश्च। मिश्रैर्गुणैर्द्वंद्वजाः सांनिपातिकाश्च भवंति। तत्रच द्वंद्वजायां प्रकृतौ दोषाणां बलाबलत्वज्ञानाय प्राधान्यज्ञानायाप्राधान्यज्ञानायच चरके गुणविशेषेण प्रकृतय उक्ताः। रूक्षलघुचल बहुशीघ्रशीतपरुषविशदलक्षणो वायुः। वातस्य रूक्षगुणविशिष्टाः पुरुषाः रूक्षापचिताल्पशरीराः प्रततरूक्षक्षामभिन्नमंदसक्तजर्जरस्वराजागरूकाश्च भवंति। लघुगुणविशिष्टाः पुरुषाः लघुचपलगतिचेष्टाहारव्याहाराः। चलगुणविशिष्टाः पुरुषाः अनवस्थितसंध्यस्थिभ्रूहन्वोष्ठजिह्वाशिरःस्कंधपाणिपादाः। बहुगुणविशिष्टाः पुरुषाः बहुप्रलापकंडराशिराप्रतानाः। शीघ्रगुणविशिष्टाः पुरुषाः शीघ्रसमारंभक्षोभविकाराः शीघ्रोत्रासविरागाः श्रुतग्राहिणोऽल्पस्मृतयश्च। ..........

शीतगुणविशिष्टाः पुरुषाः शीतासहिष्णवः प्रतत शीत कोद्वेपक-स्तंभाः। परुषगुणविशिष्टाः पुरुषाः परुषकेशश्मश्रुरोमनखदशन-वदन पाणि पादांगाः। विशदगुणविशिष्टाः पुरुषाः स्फुटितांगावयवाः सतत संधि शब्दगामिनश्च भवंति। त एवं गुण योगाद्वातलाः प्रायेणाल्प बलाश्चाल्पायुषश्चाल्पापत्याश्चाल्पसाधनाश्चाल्प धन्याश्च भवंति। "पित्तं वान्हिं वन्हिजं वा यदस्मात्पित्तोद्रिक्त-स्तीक्ष्ण-तृष्णां-क्षुभुक्षः। गौरोष्णांग स्ताम्र हस्तांघ्रि वक्त्रः। शूरो मानी पिंगकेशोल्परोमा॥ दयितमाल्य विलेपन मंडनः सुचरितः शुचिराश्रित वत्सलः॥ विभवसाहस बुद्धि बलान्वितो। भवति भीषु गति द्विषितामपि॥ मेधावी प्रशिथिल संधिबंध मांसो-नारीणामनभिमतोल्प शुक्र कामः॥ आवासः पलित [redacted] तरंगनीलिकानां भुंक्तेऽन्नं मधुर कषाय तिक्तशीतम्"॥ पित्तस्य गुणविशेषेण दृश्यमानानि लक्षणानि विकल्पनार्थमुच्यन्ते। उष्णं, तीक्ष्णं, द्रवं, विस्रं अम्लं कटुकं लक्षणं पित्तम्। पित्तस्योष्ण-गुणविशिष्टाः पुरुषाः पित्तला भवन्ति। उष्णासहा उष्णमुखाः सुकुमारावदात गात्राः प्रभूत पिप्लुव्यंग तिलकालकाः क्षुत्पिपा[redacted] सावंतः —

घिप्रवली पलितखालित्य दोषाः प्रायो मृद्वल्प कपिशश्मश्रुकेशलो-
माः। पित्तस्य तीक्ष्णगुणविशिष्टाः पुरुषास्तीक्ष्णपराक्रमास्तीक्ष्णा-
ग्नयः प्रभूताशनपानाः क्लेशासहिष्णवो दंदशूकाः। पित्तस्य द्रवगुण-
विशिष्टाः पुरुषाः शिथिलमृदुसंधि मांसाः प्रभूतसृष्टस्वेदमूत्र-
पुरीषाश्च। पित्तस्य विस्रगुण विशिष्टाः पुरुषाः पूतिवक्त्रः कक्षास्य-
शिरः शरीरगंधाः। कटुम्लत्वगुण विशिष्टाः पुरुषा अल्पशुक्रव्यावाया-
पत्याः। त एवं गुणयोगात्पित्तला मध्यमबला मध्यायुषो मध्य-
ज्ञान विज्ञान पित्तोपकरणवंतश्च भवंति। "श्लेष्मा सोमः श्लेष्मल-
स्तेन सौम्यो गूढ [redacted] स्निग्ध श्लिष्टसंध्यास्थिमांसः॥ क्षुत्तृड्दुःख-
क्लेशधर्मैरतप्तो बुध्यायुक्तः सात्विकः सत्यसंधः॥ प्रियंगुदूर्वाशर-
कांडशस्त्र गोरोचनापद्मसुवर्णवर्णः॥प्रलंबबाहुः पृथुपीनवक्षा
महाललाटो घननीलकेशः॥ मृद्वंगः सम सुविभक्त चारुवर्ष्मा
बहोजो रतिरस शुक्रपुत्र भृत्यः। धर्मात्मा वदतिन निष्ठुरंच जातु
प्रच्छन्नं वहति दृढंचिरंच वैरम्॥ श्लेष्मणो गुण विशेषेण च मृष्य-
मानाः प्रकृतय उच्यमान लक्षणा ज्ञेयाः। स्निग्धश्लक्ष्ण मृदुमधुर-
सारसांद्र मंदस्तिमित गुरु शीत विज्जलाच्छगुणः श्लेष्मा श्लेष्मणः
स्नेहगुण विशिष्टाः पुरुषाः स्निग्धांगाः श्लेष्मणः श्लक्ष्णगुणविशिष्टः-

पुरुषाः श्लक्ष्णांगाः। मृदुगुणविशिष्टाः पुरुषाः दृष्टिसुखसुकुमारावदातगात्राः। मधुरगुणविशिष्टाः पुरुषाः प्रभूतशुक्रव्यवायापत्याः। सारगुणविशिष्टाः पुरुषाः सारसंहतस्थिरशरीराः। सांद्रगुणविशिष्टाः पुरुषा उपचितपरिपूर्णसर्वगात्राः। मंदगुणविशिष्टाः पुरुषा मंदचेष्टाहारव्याहाराः। स्तिमितगुणविशिष्टाः पुरुषा अशीघ्रारंभाल्पक्षोभविकाराः। गुरुगुणविशिष्टाः पुरुषाः साराधिष्ठितावस्थितगतयः। शीतगुणविशिष्टाः पुरुषा अल्पक्षुत्तृष्णासंतापस्वेददोषाः। विज्जलगुणविशिष्टाः पुरुषाः सुश्लिष्टसारसंधिबंधनाः। अच्छगुणविशिष्टाः पुरुषाः प्रसन्नदर्शनाननाः प्रसन्नवर्णस्वराश्च। त एवं गुणयोगात् श्लेष्मला वसुमंतो विद्यावंत ओजस्विन आयुष्मंतश्च भवंति। तस्मात्प्रकृतिभेदेनाग्निभेदः। अयंच दोषाणां प्रकृतीनांच संबंधः।

शिष्यः — यथा दोषप्रकृतय उक्तास्तथान्या बहुविधाः प्रकृतय उपवर्णिता दृश्यन्ते। चरकेच जातिकुलदेशकालवयः प्रत्यात्मनियताश्चेति षड्विधाः प्रकृतय उक्ताः। सुश्रुते भगवद्गीतायां भारते आश्वमेधिकपर्वणिच रजस्तमःसत्वगुणयुक्ता त्रिस्त्रः

प्रकृतयस्तेषां प्रत्येकशोंऽशांशभेदेन बहुविधाः प्रकृतयो भवंतीत्युक्तं। नागार्जुनमतेन दोषतः सप्त, गुणतश्च सप्त प्रकृतयः संभवंति। कथमेतदुच्यते।

आचार्यः— याश्च रजस्तमःसत्व गुणात्मिकाः प्रकृतयो मनोव्यापारैकलक्ष्यास्तद्यथा दुःख बहुलता, संचारशीलता, अधृतिः, अहंकारः असत्याभिरुचित्वं, अकारुण्यं, दंभः, मानः, हर्षः, कामः, क्रोधश्चैतैर्युक्तां प्रकृतिं राजसामिति विद्यात्। विषादित्वं — नास्तिक्यं, अधर्मशीलत्वं, बुद्धेर्निरोधः, अज्ञानं, दुष्टबुद्धित्वं अकर्मशीलता, मूढत्वं निद्रालुत्वमिति तामसप्रकृतेर्लक्षणानि। आनृशंस्यं, संविभागरुचिता (संविभज्य भोक्तुमभिलाषुकता) क्षमा, सत्यं, भूतहितं, धर्मश्रद्धा, आस्तिक्यं, ज्ञानं (आत्मज्ञानं) बुद्धिः, मेधा, (ग्रंथावधारणशक्तिः) स्मृतिः, धृतिः (मनोनियमनशक्तिः) अनभिषंगः। एतानि सात्विकप्रकृतिलक्षणानि। अन्यच्च सत्वबहुलमाकाशं रजोबहुलो वायुः सत्वरजोबहुलोऽग्निः सत्वतमोबहुला आपस्तमोबहुला पृथिवीत्युपवर्णितम्। दोषाणां वातपित्तकफानां महाभूतेभ्यः संभवः प्रागुक्तः।

यथाऽऽहारेण विहारेणच वातादयः क्षयं वृद्धिं साम्यंचाप्नुवन्ति,
एवमेव रजस्तमः सत्वगुणा [redacted] अप्याहारविहाराभ्यां क्षयं वृद्धिं
साम्यंचाप्नुवंति। सामान्यतश्च रजोबहुलो वायुः, रजः[redacted] सत्व-
बहुलं पित्तं, सत्वतमोबहुलः कफः। याश्चान्या अतिप्रसक्ताद्याः
प्रकृतय उक्तास्ता अध्याचाराहारविहारभेदमूला भिन्ना भासन्ते।
एवमेव सर्वेषां प्रकृतिभेदानां वातपित्तकफेष्वेवांतर्भावो भवति।
प्रकृतौच्च महाभूतविकाराणां संबंधः प्रागुपवर्णितः।

शिष्यः— यदिसर्वदेहव्यापिनो वातपित्तश्लेष्माणः संति, तर्हि
अयं श्लेष्माशयोऽयं पित्ताशयोऽयं वाताशय इति निर्देशस्य किं
प्रयोजनम्।

आचार्यः— सर्वशरीरचरस्यापि वायोः क्रियास्थानमात्रभेदात्
प्राणादिसंज्ञाः कृतास्तथापि यतः प्रायो वातविकारा जायन्ते जाता-
श्चिदुर्जया भवंति यत्र च निकृते वायौ आस्थापनानुवासनादिना
प्रकृतिभावं प्रापिते सति सर्वेषां वातविकाराणां प्रायेणजयो भवति।
स वायोराशय इत्युक्तम्। एवमेव पित्तस्य संति ~~सौ~~ विशिष्ट-
स्थानानि नामानिच स्थाननामक्रियाभेदात्। तत्राग्न्यामाशयो

वैशेषिकं स्थानम्। यत्रस्थे पाचके पित्ते विकृते सर्वमन्यत्रगतं
पित्तसंज्ञं द्रव्यं विकृतिमाप्नोति। विविधानां रोगाणाञ्च हेतुत्वं
गच्छति, अत एवोक्तं " अग्निदोषान्मनुष्याणां रोगसंघाः पृथग्विधाः"।।
यस्मिन्नामाशयस्थे पाचके पित्ते प्रकृतिभावं नीते प्रायः पित्तविकारा
न जायन्ते तस्मात्स पित्ताशय इत्युच्यते। तथैव श्लेष्मणो वैशेषिकं
स्थानमुरो यत्रस्थितः श्लेष्मा कृत्स्नं शरीरं स्नेहार्द्रभावेनाहरहर्यो-
जयति। स श्लेष्माशय इति स्मृतः।

शिष्यः— यथावदुक्तो दोषाणामाशयानाञ्च संबन्धो विदितः।
अन्यच्च पृच्छ्यते यच्चोक्तं पित्तधरा कला श्लेष्मधरा कलेत्यादि
तस्य किं प्रयोजनं। किञ्च कलानां प्रयोजनम्। किञ्च लक्षणम्।

आचार्यः— कलानामिदं लक्षणं "स्नायुभिश्च प्रतिच्छन्नान् संततां
श्च जरायुणा। श्लेष्मणा वेष्टितांश्चापि कलाभागांस्तु तान्विदुः।
धात्वाशयान्तरे धातोर्यः क्लेदस्त्वभितिष्ठति। देहोष्मणाभिपक्वश्च
स कलेत्यभिधीयते।।" ताश्च सप्त संति। ताश्च धातूनामाशयानाञ्च
मर्यादाभूता येनचायमाशयोऽयं पक्वाशय इयं ग्रहणी, अयं
बस्तिरिदं हृदयमित्यादि अवच्छेदेन ज्ञानं भवति। ताः कला[illegible]

याश्च श्लेष्मधराकलेत्युच्यते तया धारितेन श्लेष्मणा पूर्वोक्ताः सर्वे संधयः स्थूलाः सूक्ष्मा दृश्यादृश्याश्च संश्लिष्टा भवन्ति। सा श्लेष्मधरा कला। पक्वामाशयाभिमुखमाहारस्यामाशयात् प्रच्युतस्य सत उदीर्यमाणं पित्तं या धारयति सा पित्तधरा कला।" आशितं खादितं लीढं पीतं कोष्ठगतं नृणां॥ तज्जीर्यते यथाकालं शोषितं पित्ततेजसा॥" येन पित्तेन तत्कार्यं भवति तत्पित्तं धारयत्यतः पित्तधरा कलेत्युच्यते। अन्नकिट्टं यत् (मूत्रं ~~[illegible]~~ शकृच्च) तत्कोष्ठात् पृथक्करोति सा पुरीषधरा कला। अन्नात्किट्टस्य विभजनमग्निमारुतकृतम्। तत्राप्युभयो रग्निमारुतयो रस्ति किंचित्कार्यविशेषः। रसमलयो विवेचनमाग्निकृतं। अन्नपचनकाले समुद्भूतानां विशेषाणां यद्विवेचनं तत्समानमारुतकृतम्। इयञ्च पुरीषधरा कला।

"यकृत्समंतात् कोष्ठं च तथान्त्राणि समाश्रिता॥ उण्डुकस्थं मलं विभजते इति सुश्रुतः। किट्टोत्सर्जनक्रियायामपानवायोः सहाय्यकारिणी (यत्सहायादपानः सुखेन किट्टं बहिर्विकासयति) अत्रोण्डुकशब्देन सर्वेषां वाक्यानां समन्वयान्मलाशय इति बोध्यते। यत्रगतो मलो बहिर्विष्क्रमणयोग्यतामापद्यते। ~~[illegible]~~ यस्याऽनिर्गमाद्विकारसंभवः। कोष्ठगतं सर्वं पुरीषं न निष्कासनार्हं शरीरोपयोगित्वात् ..........

(पुरीषवृद्ध्या पुरीषक्षयेणच विकारा भवंतीत्युक्तम्) वातपित्त-कफा याभिः कलाभिः संबध्यंते ता एवात्र निदर्शिताः।

शिष्यः— आशयाः कला वातपित्तकफाश्चान्योन्यं कथं संबध्यंते तत् श्रुतं। अयमपरः संशयः 'सर्वे भावाः स्रोतांस्यन्तरेण पुरुषे नाभिनिवर्तंते। क्षयं वा न गच्छंति। परिणाममापद्यमानानां धातूनां स्रोतांस्यभिवाहीनि भवंति। स्रोतसां समुदायो हि पुरुषः। प्राणोदकान्न रसरुधिरमांसमेदोऽस्थिमज्जशुक्रमूत्रपुरीषस्वेद-वहानि स्रोतांसि, इति निर्देशः कृतः। न तथा वातपित्तकफवाहीनि स्रोतांसि, इति निर्देशः कृतो न दृश्यते। कथमेतत्।

आचार्यः— यथा प्राणादीनामभिवाहीनि स्रोतांसि नियतानि न तथा वातादीनां नियतानि संति। (वातादयः सर्वशरीरचरास्तदुक्तं सुश्रुते) "नहि वातं शिराः काश्चित् न पित्तं केवलं तथा॥ श्लेष्माणं वा वहन्त्येता अतः सर्ववहाः स्मृताः॥" एवमपि शिरासु संचरितानां वातादीनामस्तिच नियतो न्यूनाधिकभावः। यासु यासु शिरासु यस्य यस्य दोषस्याधिक्यं तस्य तस्य ताः शिरास्तस्मात्तच्च शब्देन तासां निर्देशः कृतः सुश्रुते दृश्यते "क्रियाणामप्रतीघातममोहं बुद्धिकर्मणां। करोत्यन्यान्गुणांश्चापि स्वाः शिराः पवनश्चरन्।

आशिष्णुतामन्नकांक्षिमाग्निदीप्तिमरोगताम्।
संसर्पस्स्वाः क्षीराः पित्तं कुर्याच्चान्यान् गुणानपि॥
स्नेहमंगेषु संधीनां स्थैर्यं बलमुदीर्णताम्।
करोत्यन्यान् गुणांश्चापि बलासः स्वाः सिराश्चरन्॥

एवमयं दोषाणां नालादीनां धमन्यादीनां च वाह्यवाहकसंबंधः।

शिष्यः — "दोषधातुमला मूलं हि शरीरस्य, एतैर्देहो धार्यते। केचित् भावा नित्यमेव क्षीयन्ते। एवं स्थिते रक्तादिधातुषु दोषाः कथं निर्मे संगच्छंते। कथंच तेषु गुणदोषं वा जनयंति। उच्यते "आहार-संभवो देहो रोगाश्चाहारसंभवाः॥"

आचार्यः — "रसाद्रक्तं ततो मांसमित्यादि तत्र गर्भाशयस्थितस्य कालक्रमेणोपचीयमानस्य शरीरस्य वृद्धिक्रम उपदिष्टः। प्रसूति-मारुतयोगात् बहिर्निष्क्रमणानंतरमाहारोत्पन्नेन रसेनैव धातूनां परिवृद्धिर्भवति। भुक्तमात्रस्य कंठनाडीपथेन महानिम्नमवतीर्ण-स्याहारस्य यो यो भागः कायाग्निनाऽवलिह्यते पाकमुपनीयते च तस्य तस्य सारभूतः प्रसादसंज्ञो भागो निष्पत्तिसमनंतरमेव क्रमं सर्वेषु धातुषु संवृतैरसंवृतैरयनैः प्रसृतो विवृतेष्वासन्नेषु द्वारेषु

भूयान् प्रथमतरं प्राप्नोति। एवमन्नरस एव साक्षात्सर्वधातून्
किंचित्कालभेदेन पुष्णाति। षड्रसाः समस्ता व्यस्ताश्चैकशश्च द्रव्य-
माश्रिताः। यादृग्रसगुणविपाकवीर्याणि द्रव्याण्याहारत्वेनोपयुज्यंते
तादृग्विधो हि रसः संजायते। तस्मात् यथोपयुक्तद्रव्यमुखेन रसेन
धातुषु मलेषु च तस्य तस्य दोषस्य वृद्धिह्रासौ भवतः साम्यं वा
भवति। तदुक्तं चरके "जायन्ते हेतुवैषम्यात् विषमा देहधातवः॥
हेतुसाम्यात्समाः" इति "त्यागाद्विषमहेतूनां समानां चोपसेवनात्।
विषमा नानुबध्नंति जायंते धातवः समाः॥" रसे गतिमत्व-
धर्मेण वायुः, औष्ण्येन पित्तं, द्रवत्वेन कफः। एवं त्रयो दोषा रसमाश्रिताः।
ते रसमार्गेण यत्र यत्र गच्छंति तत्र तत्र गुणं दोषं वाऽऽवहन्ति।
एवमव्यवच्छिन्नसंतानं यथा भवति तथा दोषधातुमलैः शरीर-
यंत्रं साध्यते। एवमयं रसेन दोषाणां संबंधः।

शिष्यः — इदमत्र निष्पन्नं रसमूलकमेव दोषाणां धातूनां मलानां
च साम्यं वृद्धिर्ह्रासश्च। रसश्चाहारयतस्तस्मादेतदेव विस्त-
रशो वक्तव्यम्।

आचार्यः — प्रागेवोक्तमिदमाहारसंभवो देह इति। यथा च ते —

वातपित्तकफा आहारादुत्पद्यंते क्षीयन्ते वृद्धिमाप्नुवंति च
तद्विविच्यते। षड्रसात्मकानि सर्वद्रव्याणि। द्रव्याण्यपरिमेयानि।
सर्वेषां द्रव्याणां गुणदोषज्ञानं रसज्ञानेन भवति। तस्माद्द्रव्यज्ञान-
सौलभ्याय रसज्ञानमधिकृत्योच्यते। स्वाद्वम्ललवणा रसा मारुतं शम-
कटुतिक्तकषाया मारुतं वर्धयंति। कट्वम्ललवणाः पित्तं वर्धयंति।
यन्ति, कषायतिक्तमधुराः पित्तं शमयंति। स्वाद्वम्ललवणाः कफं
वर्ध ~~शमयंति~~। कटुतिक्तकषायाः कफं क्षप ~~वर्धयंति~~।

शिष्यः - नायं सर्वत्र नियमो दृश्यते यानि यानि च मधुराण्यम्ला-
नि लवणानि वा द्रव्याणि वातप्रशमनाय कल्पंते इति। कानिचित्
रसतो मधुराण्यपि द्रव्याणि वातं वर्धयंति। एवमेवाम्ललवणानि-
द्रव्याणि। तथा पित्तकफयोः शमवृद्धिसाम्यकरेषु द्रव्येषु संशयः।

आचार्यः - उच्यते यद्यपि मधुरादयो वातघ्नाः कफकारिणश्च
तथापि मधुरादिगुणयुक्तानि द्रव्याणि रौक्ष्यलाघवशैत्यगुण-
विशिष्टानि चेत्तानि मारुतोपशमाय कफवृद्धये च भवेयुः। यद्य
कषायतिक्तमधुरा रसाः पित्तघ्ना उक्तास्तथापि कषायादिगुण-
युक्तानि द्रव्याणि तैक्ष्ण्योष्ण्यलघुत्वगुणविशिष्टानि चेत्तानि
पित्तोपशमाय भवेयुः। कटुतिक्तकषायाः श्लेष्मघ्ना रसा वात-
कारिणश्च तथापि कटुतिक्तकषायगुणयुक्तान्यपि द्रव्याणि

स्नेहगौरवशैत्यगुणविशिष्टानि चेत्तानि कटुकादीन्यपिद्रव्याणि कफशमनाय वातवृद्धये च भवेयुः। कट्वम्ललवणात्मकैर्द्रव्यैः पित्तं वृद्धिमाप्नोति। कैः कैर्द्रव्यैर्दोषाणां क्षयो वृद्धिः साम्यं भवतीति तत् प्राक् संक्षेपेणोक्तम्। तदुक्तं सुश्रुते "ये रसा वातशमना भवंति यदि तेषु वै। रौक्ष्य लाघव शैत्यानि न ते हन्युः समीरणम्॥ ये रसाः पित्तशमना भवंति यदि तेषु वै॥ तैक्ष्ण्यौष्ण्य लघुताश्चैव न ते तत्कर्मकारिणः। ये रसाः श्लेष्मशमना भवंति यदि तेषु वै। स्नेहगौरवशैत्यानि न ते तत्कर्मकारिणः॥" समानगुणानि समान-गुणभूयिष्ठानि वा द्रव्याणि तांस्तान् दोषान् वर्धयंति। विपरीतानि विपरीतगुणभूयिष्ठानि च द्रव्याणि तांस्तान् दोषान् क्षपयंति।

शिष्यः — यच्चोक्तं "तत्राद्या मारुतघ्नाः (वातघ्ना) त्रयो रसास्तिक्तादयस्त्रयः कफघ्नाः कषायतिक्तमधुराः पित्तघ्ना अन्ये तु कुर्वते इति तत्र संशयः। एते त्र…यस्त्रयो रसाः समेत्य तत्तत्कार्यकारिण एकैकशो वा॥ यदि चैकैको रसस्तत्तद्दोषवृद्धिक्षय कारणस्तत्र विचिकित्सा। "यच्चोक्तं "तत्राद्या मारुतं घ्नंति" तत्र-

तत्र रसाः भिन्नगुणाः। तर्हि वातनाशरूपमेकं कार्यं कुर्वंति।
यद्यपि ते त्रयोऽपि स्निग्धास्तथापि तेषां स्निग्धत्वमपि भिन्नं,
मधुररसस्य स्निग्धत्वं शीतगुणविशिष्टं। अम्लरसस्योष्णत्वयुक्तं
स्निग्धत्वं। लवणस्य क्षारोष्णरूपं स्निग्धत्वं। एवं त्रयाणां स्वगतं
भिन्नत्वं दृश्यते। एवमेव ये रसास्त्रयस्त्रयस्तेषामपि
भिन्नत्वं दृश्यते। तस्मात् वातशामनरूपां वातवृद्धिरूपां कफशामन-
रूपां कफवृद्धिरूपां पित्तशामनरूपां पित्तवृद्धिरूपामेकां क्रियां
कर्तुं कथं प्रभवंति।
आचार्यः- उक्तपूर्वमिदं स्थानक्रियाकालभेदेन, वातादयो नाना-
विधैर्विकारैरुपतापयंति स्वैर्गुणैरनुगृह्णंति च तद्विविच्यते। यदा-
चोष्णरूक्षगुणयुक्तो वातो भवति तदा संधिविश्लेषशोषणादीन्
करोति। धातुमलं क्षैण्यमुत्पादयंति। तथैव चोषदाहादयः पित्त-
विकारा यदा जायंते स्वरो भिद्यते तदा मधुरो रसः शीतस्नि-
ग्धादिगुणयुक्तत्वात् रौक्ष्यौष्ण्यगुणजनितान् विकारानुपजनयति।
क्षीणान् धातून् वर्धयति। जीवनस्तर्पणः स्थैर्यसंधानकरः
दाहादिप्रशमनश्च मधुरः स्निग्धगौरवादिगुणैर्मारुतस्य —

रौक्ष्य लाघवादीनपाकरोति। एतत्कार्यं कर्तुमिमौ लवणौ न क्षमवेताम्। यदा स्वनैर्गुण्यात् गतिनिरोधकारणाद्वा मारुतो मूढो विमार्गगो वा स्यात् तदाऽम्लो रसो मारुतं मार्गे स्थापयति (अनुलोमयति) वायोः वृद्धिगतौ शीतरूक्षौ गुणौ स्वाभ्यां स्निग्धोष्णगुणाभ्यां क्षपयति। नैतत्कार्यं मधुरेण भवति। श्लेष्मणः स्थैर्यगौरवगुणाभ्यामामदोषेण वा जायमानं मारुतविरोधं कफजम्यरसजनितं वा लवणोरसः क्षरणत्वात् दिव्यंदित्वात् उष्णत्वाद्दूरीकरोति। मारुतमनुलोमयति। एवं समासतो मधुरादयो वातप्रशमनक्रियां स्वैर्गुणैः कथं कुर्वीति तदुक्तं। ये वातघ्ना रसास्ते श्लेष्मवर्धना ऊषण तिक्त कषाया श्लेष्मनाशना स्तत्रापि प्रतिरसं कार्यभेदः। मधुररसातियोगात् जायमानां विकृतिं उष्णोरसः क्षपयितुमलं भवति। नाम्लरसजातां कफजां विकृतिं क्षपयितुमलं भवति। यच्च वीर्यतः शीततिक्तरसं द्रव्यं तदम्लरसजनितं श्लेष्माणं क्षपयति। अत एवोक्तं उष्णकाले वाऽम्लरसोत्पन्नेऽम्लपाकजनिते श्लेष्मणि श्लेष्मविकारेच धारदो विधिः प्रयोक्तव्य इति। एवमेव तेषां तेषां दोषाणां विकारप्रशमने स्वास्थ्यानुवृत्तौच त्रयो रसा भिन्नाभिन्नप्रयोजनाः संति।

अतएव चाचार्यैर्दोषाणां रसानांच गुणकर्माणि ~~विविध~~ – विमृश्याहारविधी रुपदिष्टः। तदुक्तं " विधिना कृतआहारैः पोषणो धातुवर्धनः॥" भोजनविधौ रसानुपूर्व्या सुश्रुते उपदिष्टः।

शिष्यः — यथाहि दोषाणां गुणदोषविवृद्धये भिन्नप्रयोजनाः षड्रसाः सन्ति तथा रसादि शुक्रांतानां धातूनां पोषणे, वृद्धानांच तेषांक्षपणे तुल्यबलाः सर्वे आहोस्वित् भिन्नाभिन्नप्रयोजनाः।

आचार्यः — यद्यपि सर्वे रसाः शरीरवर्धनास्तथाप्यस्ति तेषां प्रयोजनविशेषः। मधुरेण रसेण विशेषतो रक्तं वर्धते। अम्लो मज्जा-वर्धनः (मज्जावृध्दिकराणि द्रव्याणि पाचयति) लवणादस्थिवर्धते।
तिक्ताच्च मेदः, कटुकान्मांसं वर्धते
^(तीक्ष्णगुणः मांसादि तत्समानगुणानि द्रव्याणि सम्यक्पाचयित्वा मांसभावं नयति) कषायाद्रसो वर्धते। अम्लाच्च शुक्रं वर्धते। एवं-यथोक्तकार्यविर्वर्तनारसा। समयोगयुक्ताश्चेत् सर्वे षड्रसाः सर्वे वातादयो धातवो मलाश्च स्वं स्वं यथोक्तमानं नातिवर्तन्ते। केषां-चिद्रसानां मातिसेवनादनतिसेवनाद्वैषम्येणोपयोगाद्वा केचित् धातवोऽधिकं वर्धते केचित्क्षीयंते। एवं रसानां हीनयोगातियोगत-स्तत्तद्रसादिधातुषु ते ते दोषा रसानुसारेण वृध्दाः क्षीणाश्च भवंति।

अत्याहारेण त्रयो दोषाः कुप्यंति। हीनमात्रं भोजनं मनशनं वा सर्वेषां वातरोगाणां हेतुतां प्रपद्यते। एवं दोषाणामाहारेणानाहारेण चोत्पत्तिः क्षैण्यं च व्याख्यातम्। रसाश्च द्रव्यमाश्रित्य वर्तते। अस्य विषयस्य तात्पर्यं सुश्रुते एवं विदिश्यते " गुणा य उक्ता द्रव्येषु शरीरेष्वपि ते तथा ॥ स्थान वृध्दिक्षयास्तस्मात् देहिनां द्रव्यहेतुकाः॥"

शिष्यः — आहारमूलान्येव दोषाणां वृध्दिक्षय साम्यानि, उताहो संसृन्येऽपि दोषाणां वृध्दिक्षय साम्यहेतवः।

आचार्यः — यथा चाहारद्रव्याणि स्वास्थ्यास्वास्थ्यहेतवः तथा तदधिकं कालो हि नाम भगवाननादिमध्य निधनः सर्गस्थित्यन्त हेतुः। कालः प्राणिनां स्वास्थ्यास्वास्थ्यहेतुरुक्तः। यस्मिंश्च षण्णां रसानां संपत्‌व्याप (प्राणिनां) जीवितं मरणं चावस्थितम्। सूक्ष्मसूक्ष्मामपि कलां न लीयते इति कालः। स च द्विविधो नित्यगश्चावास्थिकश्च। नित्यगस्तु ऋत्वादिसात्म्यापेक्ष आवस्थिको विकारमपेक्षते। कालः स्वयमेकरूपोऽपि नानारूपेणादृष्टेन परिगृहीतः सोमसूर्यानिलान् दुर्बलान् बलीयसो वा करोति

तच्च बलाबलत्वं चंद्रार्कादीनां गत्या बोध्यते। यदा च कालवशात्
रविरंतकसेवितां दिशामाश्रयते ततःप्रभृति शनैः शनैरुष्माद-
क्षयपूर्वं शैत्यं वर्धते। रात्रयश्च दीर्घा भवंति अहश्चाल्पतमेति।
शीतं चोष्णं चेति परस्परविरुद्धधर्मौ अपि। तदुक्तं चक्रपाणिना
"शीतं कफमारुतकृत् वीर्यं गुरुपित्तनाशनं बल्यम्। उष्णं कफ-
वातहरं पित्तकरं लघु वृष्यं च॥" शैत्यप्रभावात् स्निग्धशीत-
गुर्वादयो गुणा आप्यायनकराः अतः संग्रहे उक्तं "दक्षिणायने
सोमो हि बलवान् मेघवातवर्षाभिभूते दिवाकरे जगत्यरूक्षा
मधुराम्ललवणा रसा बलवंतो भवंति। तस्मिन् काले मधुराम्ललवण-
भूयिष्ठानां द्रव्याणामुपयोगात् प्राणिनामोषधीनां च बलमुपचीयते।
त्रिभिर्वर्षाशरद्धेमन्तैः ऋतुभिः परिसंख्यातं कालं दक्षिणायन-
मिति विद्यात्। उत्तरां दिशमधिगच्छति सवितरि तस्य भाभि-
र्जगतः स्निग्धादयो गुणाः अपचीयन्ते। वायवश्च तीव्रोष्णरूक्षा
भवंति। ते च क्रमेण दिवसानां दीर्घभावात् रौक्ष्यमुत्पादयन्तः
तिक्तकटुकषायान् रसानभिवर्धयन्ति। तेन च नृणां तत्काल-
प्रभावात् बलं क्षीयते। शिशिरवसंतग्रीष्मैः स्त्रिभिः ऋतुभिः—

उदगयनं विद्यात्। तस्मिन्नुदगयनेऽन्हां दीर्घभावात् कायवाङ्-
मनसां चेष्टा-बाहुल्यं निद्राल्पत्वंच स्यात्। तेनचोष्णरूक्षादिगुणा-
तिवृध्दिश्च भवति तेन शरीरगतः स्नेहः संक्षीयते ओषधयश्चापि
स्नेहशून्या भवंति। उपाधिभेदेनापि कालस्य त्रैविध्यं। शीतः
कालः, उष्णः कालः, वृष्टिःकाल इति। एषां त्रयाणां कालानां
षण्णां ऋतूनांच सोमसूर्यानिलगति विशेषात् भ्रूयमानानि परि-
वर्तनानि संग्रहे यथाविभागं लक्षणानि निगदितानि। उपदिष्टश्च
तत्तत्कालानुगुणः स्वस्थहिताचारः। तंच स्वास्थ्य संरक्षकं ऋतु-
दिनचर्याविभागेन आयुर्वेदे धर्मशास्त्रेच यथोपदिष्टं स्वस्थवृत्तं
यावच्छक्य मनुपालयतां न स्वास्थ्यभंगो भवेत्। अथापरो व्या-
ध्यवस्था विभागेन बहुविधः क्रियाकालो भेषजयोगाय कथितः।
"शीते शीतप्रतीकारं उष्णेचोष्ण निवारणम्॥ वृष्टौ वृष्टिप्रतीकारं
क्रियाकालं न हापयेत्॥" "अप्राप्तेवा क्रियाकाले प्राप्तेवा न ~~क्रिया~~
कृता क्रिया॥ क्रिया हीनातिरिक्ता वा साध्येष्वपि न सिध्यति॥"
स्वगुणैरति युक्तेषु विपरीतेषु देहिनाम्॥ विषमेष्वपि वा दोषाः
कुप्यंति ऋतुषु वा पुनः॥" यदा स्वेषु स्वेषु स्थानेषु स्वैः स्वैः कारणैः

दोषाः संचीयंते। तदा ते भूयमानानि लक्षणानि। संचिते वा ते
स्तब्धपूर्णकोष्ठता, पित्ते चयं गते पीतावभासता। कफस्य चयेन
मन्दोष्मता गौरवमालस्यं च सर्वेषां चयकारणविद्वेषश्चावस्तु तो-
ऽयमेव क्रियाकालः; अस्मिन्नेव क्रियाकाले यथावत् प्रतिक्रियमाणा
दोषा ~~[illegible]~~ न विकारवृद्धये भवेयुः। प्रथमे क्रियाकाले-
ऽनुपक्रम्यमाणा दोषा वातपित्तश्लेष्माणः कोष्ठतोदसंचरणा-
म्लिका पिपासा परिदाहा अद्वेषहृदयोत्क्लेदादीन् विकारानुपजनयंति।
अयं द्वितीयः क्रियाकालः। तस्मिन् द्वितीये क्रियाकाले उपेक्षणात्
विशेषतः प्रकुपिता दोषा इमानि स्वानि स्वानि लिंगानि दर्शयंति।
तत्र विमार्गगमनाटोपौ वायोः, ओषचोषपरिदाहधूमायनानि पित्तस्य।
कफस्य चारोचकोऽविपाकोऽङ्गसादश्छर्दिश्चेति। तत्रापि तृतीये
क्रियाकाले भ्राहेऽपि दोषाणामप्रतीकारात्तांस्तान् शरीरप्रदेशान-
भिगम्य विविधान् व्याधीन् जनयंति। यदा च दोषा उदरसंनि-
विष्टा भवंति तदा गुल्मविद्रध्युदराग्निसंगानाहविषूचिकाति-
सारप्रभृतीन् विकारानुपजनयान्ति। बस्तिगता प्रमेहाश्मर्या-
दीन्, वृषणगता वृध्यादीन्, मेढ्रगता निरुद्धप्रकशोपदंशादीन्,
गुदगता अर्शोभगंदरादीन्, ऊर्ध्वजत्रुगता ऊर्ध्वजान्, .....

त्वङ्मांसशोणितस्थाः कुष्ठक्षुद्ररोगादीन् [illegible] मेदोगता
ग्रंथ्यपच्यादीन्, अस्थिगता विद्रध्यादीन् पादगता श्लीपदवातरक्ता-
दीन्, सर्वांगगता ज्वरादीन्, तेषामेवाभिनिविष्टानां दोषाणां तत्तद्रो-
गपूर्वरूपाणि प्रादुर्भवंति स चतुर्थः क्रियाकालः। तस्यामप्यवस्थायां
अप्रतीकारादतिवृद्धैः कुपितैर्दोषैः सर्वात्मनाभिव्यक्तस्वस्वलक्षण-
व्याधयो भवंति स पंचमः क्रियाकालः। व्याधिवशेन प्राणादिवात-
भेदेनौषधयोगस्य कालो भिन्नाभिन्नस्तदुक्तं संग्रहे "अभक्तं प्राग्भक्तं
मध्यभक्तमधोभक्तं सभक्तमंतरभक्तं सामुद्गं मुहुर्मुहुः सग्रासं
ग्रासाग्रासांतरं निशि च॥" "कफोद्रेके गदेऽनन्नं बलिनो रोगरोगिणोः॥
अन्नादौ विगुणेऽपाने समाने मध्य इष्यते॥ व्यानेऽन्ते प्रातराशस्य
सायमाशस्य तूत्तरे॥ ग्रासाग्रासान्तयोः प्राणे प्रदुष्टे मातरिश्वनि॥
मुहुर्मुहुर्विषच्छर्दिहिध्मातृट्श्वासकासिषु॥ योज्यं संभोज्यं
भैषज्यं भोज्यैश्चित्रैररोचके॥ कंपाक्षेपकहिध्मासु सामुद्गं लघु-
भोजिनां॥ ऊर्ध्वजत्रुविकारेषु स्वप्नकाले प्रशस्यते॥" एवं री-
तोऽप्यवर्षलक्षणापेक्षया व्याध्यवस्थापेक्षयाच द्विविधः कालः।
तं तं कालं तं तमृतुमासाद्य येये कालानुसारेण रसा बलवंतो
भवंति ते ते तं तं दोषं वर्धयंति विपरीतगुणाश्च तं तं दोषं क्षपयंति।

एवं यथोक्तविधिलक्षणोऽयं कालस्य दोषाणां चान्योन्य संबंधः।

शिष्यः — कालस्य विकृताविकृतानि लक्षणानि कार्याणि संक्षेपतो

~~[illegible]~~ जिज्ञास्यंते।

आचार्यः — षट्सु ऋतुषु लक्षणशो वर्णितेषु खलु त्रिविधः कालोऽपि वर्णितः स्यात्। षण्णां ऋतूनां लक्षणान्यल्पतरशोऽहोरात्रे भवंति। तदुप-तदपृष्टमप्युच्यते। पूर्वाण्हे वसंतस्य लिंगं मध्यान्हे ग्रीष्मस्यापराण्हे प्रावृषः प्रदोषे वार्षिकं शारदमर्धरात्रे प्रत्युषसि हैमंतमुपलक्षयेत्। हैमंत ऋतौ "वायुर्वात्युत्तरः शीतो रजोधूमाकुला दिशः॥ छन्नस्तुषारैः सविता हिमानध्दा जलाशयाः॥ दर्पिता ध्वांक्ष खड्गाह्व महिषोरभ्र कुंजराः॥ रोध्रप्रियंगुपुन्नागाः पुष्पिता हिमसाह्वये॥ हेमंते सलिलं स्निग्धं वृष्यं बल-हितं गुरु॥ शीते शीतानिलस्पर्श संरुध्दो बलिनो बली॥ पक्ता भवति हेमन्ते मात्राद्रव्यगुरुक्षमः॥" स यदा नेंधनं युक्तं लभते पक्तुं तदा देहजं रसं हिनस्ति॥ रसक्षयाद्वायुः प्रकुप्यति। तस्मात्तुषारसमये स्निग्ध-मधुराम्ललवणान् रसानुपसेवेत। "हेमन्तेऽभ्यस्यतस्तोयमुष्णं चायु-र्नहीयते॥" वर्जयेदन्नपानानि लघूनि वातलानि च॥ शिशिरे शीतमाधिक्यं वातवृष्ट्याकुलादिशः॥ शेषं हेमन्तवत्सर्वं"। उदकं तु लघुतरं। कफ-

एवमुपवर्णिताभ्यां हेमंतशिशिराभ्यां शीतः कालो व्याख्यातो भवति।
वसंते दक्षिणोऽनिलः प्रवाति दंपत्योर्मानं भिनत्ति। दिशो निर्मला जायन्ते।
कोकिलाषट्पदगणैरुपगीताः पल्लवोज्ज्वला बकुलचूताशोकादयो भवंति।
कजायं मधुरं स्निग्धं विद्याद्वासंतिकं जलम्॥ वसंते निचितः श्लेष्मा दिनकृ-
द्भाभिरीरितः। कायाग्निं बाधते रोगांस्ततः प्रकुरुते बहून्॥" तस्मात् वसंते
वमनादीनि कारयेत् "गुर्वम्लस्निग्धमधुरं दिवास्वप्नं च वर्जयेत्॥"
सुखांबुना शौचविधिं शीलयेत्। ग्रीष्मे च सूर्यो जगत् स्नेहमादत्ते। वायव-
सलिलं विशेषतः अनभिष्यंदि, सूर्यश्च तीक्ष्णांशुर्भवति।
श्च तीव्ररूक्षा भवंति। नैर्ऋतो मारुतः प्रवाति "भूस्तप्ता सरितस्तन्व्यो
दिशः प्रज्वलिता इव॥ स्वादु शीतं द्रवं स्निग्धमन्नपानं तथा हितं॥ लवणाम्ल-
कटूष्णानि व्यायामं च विवर्जयेत्॥" इति एवं वसंतग्रीष्मयोर्वर्णनेनोष्णः
कालो व्याख्यातः। "आदानदुर्बले देहे पक्ता भवति दुर्बलः॥ स वर्षास्व-
निलादीनां दूषणैर्बाध्यतेऽचिरं॥ वर्षास्वग्निगुणे क्षीणे कुप्यंति पवनादयः॥
भूबाष्पान्मेघनिष्यंदात्पाकादम्लाज्जलस्य च॥ तस्मात्साधारणः सर्वो
विधिर्वर्षासु शस्यते॥ व्यायाममातपं व्यवायं नदीजलं च वर्जयेत्। पान-
भोज्यानि क्षौद्रान्वितानि भजेत्। वर्षासु "गुर्वभिष्यंदि पानीयं वार्षिकं
मधुरं नवं च॥" आंतरिक्षं, औद्भिदं वा कौपं सारसं च ~~[illegible]~~।
तप्तशीतं जलं पिबेत्।

वर्षाशीतोचितांगानां सहसैवार्करश्मिभिः॥ तप्तानामाचितं पित्तं
प्रायः शरदि कुप्यति॥ तत्रान्नपानं मधुरं लघुशीतं सतिक्तकम्॥"
न दिवास्वप्नं प्राग्वातं वर्जयेत् जलं शरदि......
पित्तप्रशमनं सेव्यं। आतपं तैलं वसामानूपमांसं क्षारं दधि तत्तु लघ-
मिष्यंदि हंसोदकमिति ख्यातं शारदं विमलं शुचि। स्नानपाना-
वगाहेषु हितमंबु यथामृतं॥" यथोत्तरं भावप्रकाशोक्तऋतुप्रकृतिः
हेमंतः शीतलः स्निग्धः स्वादुर्जठरवह्निकृत॥ शिशिरः शीतलस्तीव्र-
रूक्षो वाताग्निवर्धनः॥ वसंतो मधुरः स्निग्ध श्लेष्मवृद्धिकरस्मृतः॥
ग्रीष्मो रूक्षोऽतिकटुकः पित्तकृत्कफनाशनः॥ वर्षाशीता विदाहिन्यो
वह्निमांद्यानिलप्रदाः॥ शरदुष्णा पित्तकर्त्री नृणां मध्यबलप्रदा॥
ऋतुषट्कं समाख्यातं रवे राशिषु संक्रमात्॥ ग्रीष्मो मेषवृषौ,
प्रावृट् मिथुनकर्कटौ, सिंहकन्ये वर्षा, घटवृश्चिकौ शरत्, धनुर्ग्राहौ
हेमन्तः, कुंभमीनौ वसंतः॥ वाग्भट्टेन्च "मासैर्द्विसंख्यैर्माघाद्यै-
रित्यादि षड् ऋतवोऽभिहिताः॥ एतेन्च षड् ऋतवः शीतोष्णवर्ष-
लक्षणास्तत्र चंद्रादित्ययोः कालविभागकरत्वात् द्वेऽयने दक्षिण-
मुत्तरंच। दक्षिणायनं वर्षाशरद्धेमंतास्तेषु सोमो बलवान्.
सोमस्य शीतत्वात्। स्वभावतः स्निग्धाः मधुराम्ललवणा रसा —

बलवंतो भवंति। अतः सर्वप्राणिनामुत्तरोत्तरं बलमभिवर्धते। उद-
गयने शिशिरवसंतग्रीष्मास्तेषु सूर्यो बलवान् तेजस्तीक्ष्णोष्ण-
धर्मत्वात्, निसर्गतश्च तिक्तोषणकषाया रसाः शोषणास्तस्मात्
तस्मिन् काले तिक्तोषणकषाया वीर्यवंतः स्युः। तेन चोत्तरोत्तरं सर्व-
प्राणिनां बलं हीयते तच्चोक्तं सुश्रुते "शीतांशुः क्लेदयत्युर्वीं विव-
स्वान् शोषयत्यपि। तावुभावपि संश्रित्य वायुः पालयति प्रजाः॥"
एवमव्यापन्नेषु ऋतुषु आप ओषधयश्चाव्यापन्नाः संभवंति। ताश्चो-
पभुज्यमानाः प्राणायुर्बलवीर्यौजस्कर्यो भवंति।
शिष्यः — कथं चक्रवत्परिभ्रमता कालेन यथाक्रमं मुहुर्मुहुः प्राप्त-
परिवर्तना ऋतवो व्यापन्ना भवंति।
आचार्यः — सर्वजनसामान्येनाधर्मेण ऋतवो व्यापद्यंते तेन च
विपरीतभावं गतानि शीतोष्णवर्षाणि ओषधीरपश्च व्यापादयंति।
ततस्तासामुपयोगाद्विविधरोगप्रादुर्भावो मरको वा भवेत्
अत एवोच्यते "स्वगुणैरतियुक्तेषु विपरीतेषु वा पुनः॥ विषमेष्वपि
वा दोषाः कुप्यंत्यृतुषु देहिनाम्", तस्मात्प्रत्यृतु युक्तमाहारमा-
चारं चाचरतां न वातादयो विकृतिमाप्नुयुः॥ विसर्गादानविक्षेपैः-
सोमसूर्यानिला यथा॥ धारयंति जगद्देहं वातपित्तकफास्तथा॥

शिष्यः — दृष्टांत दार्ष्टांतिकयोर्यत्र कुत्रापि साम्यं वर्तते। यश्च विसर्गा-
दानमिति यच्च श्लोकार्धेन दृष्टांतः प्रदर्शितः तत्र तु ईषदपि साम्यं न
दृश्यते "जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते नश्यतीति
षड्विकारवतः पंचीकृत पंचमहाभूत विकारसमुदायात्मकस्य चेतना-
चेतनस्य जगतो व्यवहार निर्वर्तिनाः सोमसूर्यानिलात्मकाः। व्यक्ति-
माश्रित्य वर्तमाना वातपित्तकफ संज्ञिताः। एवं हि श्रूयते बहि-
श्चराणां सोमसूर्यानिलानां प्रभावः। इमानि बहिश्चरस्य वायोः कर्माणि
तद्यथा धरणिधारणं, ज्वलनोज्ज्वालनं, आदित्यचंद्रनक्षत्रग्रहग-
णानां संतानगतिविधानं, मेघानां सृष्टिः, अपां विसर्गः स्रोतसां
प्रवर्तनम्, पुष्पफलानामभिनिर्वर्तनं, औद्भिदानामुद्भेदनं ऋतूनां
प्रविभागः, शस्याभिवर्धनमित्यादि। एवं यथोक्तकर्मा विश्वरूपो
लोकानां कांतैर्विधो भगवान् वायुः। तथैव तथाप्रभावः
सविता "तेजस्तामपि यत्तेजः" स्मृत्यादिषु नैरुपवर्ण्यते "सूर्य
आत्मा जगतस्तस्थुषश्च" यस्मिन् विश्वस्य आरोग्यं समाश्रितम्।
अतर्क्य शक्तिभिः सहस्रकिरणैर्जगदनुगृह्णात्येत द्विजानंतो विद्वांसः
"हृद्रोगं मम सूर्य हरिमाणं च नाशय" इत्यादि रामायणे भारते चैवमेव।



तथैव सोमो हि "सोमो राजा प्रथम ओषधीनां" ओषधयो हि प्राणिनां जीवनसाधनानि। एतेऽनन्यसाधारणधर्माणो विश्वं व्याप्य स्थिताः सोमसूर्यानिला ~~देहमाश्रिता~~ देहमाश्रिता निर्दिष्टा यथा वातपित्तकफाः क्र।

आचार्यः— स्थूलबुद्धितया यत्किंचिदल्पपासि। वायोस्तु वातसंज्ञयैव व्यपदेश आयुर्वेदे। सूर्याग्नी चेति तेजःशब्दस्यापरपर्यायौ। सोमो जलदेवता। चेतनाचेतनस्य जगतो जीवनपुष्टिबलोपचयारोग्यादीनि निष्पादयति। "रूपरसस्पर्शद्रवत्वस्नेहसंयोगविभाग~~[illegible]~~-परत्वापरत्वगुरुत्वसंस्कारवत् उदकं नैसर्गिकं रूपं शुक्लं मधुरो रसः स्पर्शः शीतः स्नेह उदके एव द्रवत्वं सांसिद्धिकम्। तस्य कार्यं त्रिविधं शरीरेन्द्रियविषयसंज्ञकं। तेजो रूपस्पर्शसंख्यापरिमाणपृथक्त्व—संयोगविभागद्रवत्वसंस्कारवत् । तस्य च रूपं शुक्लं भास्वरं स्वरूप-प्रकाशकं, शुक्लरूपं तेजस्यैव। पृथिव्युदकयोः शुक्लं रूपं न प्रकाशकं यच्च लोहितं कपिलं नीलं रूपं अग्नौ प्रतीयते तच्चाश्रयोपाधिकम्। तच्च कार्यभेदेन चतुर्विधं, भौमं, दिव्यं, औदर्यं, आकरजं च, भौमं काष्ठेन्धनादिप्रभवं स्वेदनादिसमर्थं। दिव्यं अबिन्धनं सौरविद्युतादि

औदर्यमुदरे भवं, औदर्यं तेजो भुक्तस्याहारस्य रसमलधातुभावेन परिणामप्रयोजनं। आकरजं सुवर्णादि "कारणानुविधायित्वात् कार्याणां तत्स्वभावता।" नहि कार्याणि स्वकारणात् भिद्यन्ते। बहिश्चराणां सोमसूर्याग्निलानां यानि कार्याणि तान्येव व्यक्तिमाश्रित्य सोमसूर्यानिलाः निर्वर्तयन्ति। बहिश्चरे वायौ शब्दः स्पर्शौ गतिमत्त्वं यथा, तथा शरीरगते वायौ (शरीरे शब्दस्पर्शगतिमत्त्वादि यतो भवन्ति स वायुरित्यर्थः)। स च द्रव्यहेतुरनुष्णाशीत उक्तः, अत एव "दाहकृत्तेजसा युक्तः शीतकृज्जलसंश्रयात्"॥ अत एव वायुर्योगवाहीत्युच्यते। यथा च बहिश्चरं तेजो दहनपचनप्रकाशनवर्णरूपग्राहकं तथैव शरीरगतमपि तेजः। यथा च बहिःस्थितं सलिलं जीवनपुष्टिबलारोग्यादिकरं तच्छरीरगतमपि तानि कार्याणि करोति। (जीवनपुष्टिबलारोग्यादीनि यतो भवन्ति तदेव शरीरगतं स्नेहार्द्रभावस्वरूपं सलिलमिति जानीयात्।) यथा च
* बहिश्चराणां तेषां कार्याणि दृश्यन्ते तथैव तेषां शरीरगतानि ~~[illegible]~~ कार्याणि

शिष्यः — कुतस्तर्हि संज्ञाभेदः कृतः, सोमसूर्यानिलैरेव नामभिर्निदर्शयित्वा तथ्यानि कार्याणि वातपित्तकफसंज्ञाभिर्निर्दिष्टानि।

आचार्यः — सोमसूर्यादयः समष्टिरूपेण बहिःस्थिता व्यष्टिरूपेण देहमाश्रितास्तस्मात् समष्टिव्यष्टिरूपस्य व्यवच्छेदार्थं शरीरगतानां तेषां वायुः पित्तं कफ इति संज्ञाः कृता। शरीरान्तर्बहिश्चराणां वातपित्तकफानां सोमसूर्यानिलानां च समानधर्मित्वात्तुल्यकार्यत्वात्साम्यं (तस्य चापरपर्यायः सामान्यम्)

शिष्यः — सृजनकाले यावन्मानमवस्थिता दोषास्तन्मानेनैवा देहावसानमक्षीणा अवतिष्ठन्ते। उत देहवाङ्मनोव्यापारेण ते क्षीयन्ते पोष्यन्ते च।

आचार्यः — नित्यं च ते क्षीयन्ते पुष्यन्ति च तद्यथा परिणामतश्चाविरुद्धा आहारगुणा यथा स्वं शारीरगुणभावं आपद्यन्ते विरुद्धाश्च विहन्युरतश्चोक्तं धातवो मलादिदोषाश्च समानगुणैः समानगुणभूयिष्ठैरभ्यस्यमानैराहारविहारैः क्षीणाः पुष्यन्ति विपरीतगुणैर्विपरीतगुणभूयिष्ठैरभ्यस्यमानैर्वृद्धाश्च क्षीयन्ते। तद्यथा गुरुलघुशीतोष्णस्निग्धरूक्षमन्दतीक्ष्णस्थिरसरमृदुकठिनविशदपिच्छिलश्लक्ष्णखरस्थूलसूक्ष्मसान्द्रद्रवा एते द्रव्यगुणाः। तेषु ये गुरवो गुणास्तेऽभ्यस्यमानैर्गुरुभिराहारगुणैराप्यायन्ते लघवश्च क्षीयन्ते। लघवश्च लघुभिराप्याय्यन्ते गुरवश्च ह्रसन्ति।

एवमेव दोषधातुगुणानां सामान्ययोगात् पोषणं विपर्ययोगात्त
क्षपणंच भवति। कटुतिक्तकषाय रूक्ष लघु शीत गुणभूयिष्ठैर्वायुः
पोष्यते। अम्ललवण कटुक क्षारोष्ण-तीक्ष्ण गुणात्मकैः पित्तं पोष्यते।
^ स्निग्ध गुरु मधुर सान्द्र पिच्छिल-गुणात्मकैः श्लेष्मा पोष्यते। ^पर्यायेण
^धातूनां साम्यानुग्रहार्थमेव रसगुणानाहारविकारांश्चोपयुञ्ज्यात्।
"धातुसाम्य क्रिया चोक्ता तन्त्रस्यास्य प्रयोजनं॥" यथास्वमाना-
वस्थितै दोषै राहाररसे साद्गुण्यमुपजायते। एवमयं दोषाणां पोष्य-
पोषकसंबंधः। रुधिरभावाय स्वाग्निना पच्यमानस्य रसस्य
त्रिविधः पाको जायते तत्र यः स्थविष्ठो भागः सः स्वं याति (शरी-
रारंभकं रसधातुं याति) सूक्ष्मो भागो रक्तं याति। तन्मलः सः
शरीरारंभकं दोषं कफं याति (तेन च स्नेहार्द्रभावाभ्यां शरीरपोषको
भवति) एवमेव स्वाग्निना पच्यमानस्य रक्तस्य स्थूलसूक्ष्मस्त-
न्मलश्चेति त्रिविधः पाकः। स्थूलः स्वं याति सूक्ष्मो मांसमाप्या-
ययति। यन्मलः सः शरीरारंभकं पित्तं याति। यथोक्तलक्षणो रस
एव शुक्रांतानां धातूनां मलानांच पोषकः।

शिष्यः—एते दोषाः स्वैः स्वैर्गुणैः कृत्स्नं शरीरं व्याप्नुवन्त्युताहो
कंचित् भागं सर्वैर्गुणैः कंचित् कतिपयैः कुत्रचिदल्पशो वा, इति
जिज्ञास्यते.......

आचार्यः— पक्वाशये नाभौ उरसिच सर्वैर्गुणैरान्वीताः दोषाः। तत्र वायुरस्थानि भूयिष्ठैर्गुणैः स्थितो न तु कृत्स्न्येन। पित्तं तु भूयिष्ठैर्गुणैः रक्ते स्थितं श्लेष्मा इतरेषु। तदुक्तं भावप्रकाशे "रक्ते वन्हेर्गुणा अतिरिक्ताः। मेदसि रसे मज्जि शुक्रे चापां गुणाः। रक्तादीजन्मूना मूत्रे स्वेदे च वन्हेर्गुणाः। अस्थिच पृथिव्यनिल-तेजसां। एवं धातूनां आश्रयाश्रयिभावः। एवं दूषिता आश्रया आश्रयिणो विकुर्वंति, विकृता आश्रयीण आश्रयान दूषयन्ति। एवमयं दोषाणां धातूनांचाश्रयाश्रयिभावः "जीर्णेऽन्ने वर्धते वायुर्विदग्धे पित्तमेधते॥ भुक्तमात्रे कफश्चापि क्रमोऽयं भोजनोपरि॥

शिष्यः— भोजनसमये यौगपद्येन दोषाः पचनकार्यं निष्पा-दयंति, उताहो पचनकार्यनिर्वर्तनेऽस्ति तेषां क्रमः।

आचार्यः— जिव्हायां कवलनिधापनादारभ्य प्राणेन वायुनाऽऽमाशयं नीतस्य क्लेदिनस्यान्नस्याफेनोदयं कफस्य कार्यं। यावत फेनोपरमं जाठराग्नेः कार्यं। ग्रहण्यामुदीर्यमाणेन व्यपगताम्ल-भावस्यारस्य सतोऽनंतरं वायोः कार्यं। एवमाहारसमये दोषाणामवस्थानम्।

शिष्यः — यत्प्रागुक्तं इयत्तया दोषाणां मानं यथावत् दुर्ज्ञेयं तदुपपन्नं, नास्ति तेषां मानत्वे संदेहः। तथापि प्रजननकालारभ्यावृद्धभावमेकमानेनैव देहे दोषाणां प्रमाणमुत वयोविशेषेण न्यूनाधिकतामापद्यते।

आचार्यः — भवति च तेषां प्रमाणे वयोविशेषेण न्यूनाधिक्यं। जंतोर्गर्भाशयस्थस्य सतो मातुराहाररसादेव परिवृद्धिर्भवति। उत्पत्त्यनंतरं च दुग्धरूपेण परिणतेन रसेन पुष्यति। तदभावे तत्सदृशगुणेन द्रव्येण पुष्यति। तदुक्तं "रसजं वपुर्जन्मवृत्तिर्वृद्धिरलोलता॥" "सम्यक्पक्वस्य भुक्तस्य सारो निगदितो रसः॥" "स तु द्रवः सितः शीतः स्वादुः स्निग्धश्चेति। उक्तलक्षणेन श्लेष्मणा सर्वात्मना तुल्यगुणत्वात् शैशववयसि श्लेष्मभूयिष्ठा प्रायः प्राणिनां प्रकृतिः। स्वपरश्चेत्यस्य दुग्रहेणोत्पद्यमानानां कफविपक्षहेतूनां कामचिंताक्रोधासूयाजागरादीनामसंभवात् बाल्ये आनंदरूपावृत्तिः प्रायो बालानां। तस्मात् श्लेष्मण आधिक्यं। तथा च यौवने यथेष्टचारित्वात् कामतंत्रप्राधान्यात् बलसंपदुपेतत्वात् नूनमापातभद्रान् विषयान्भुञ्जानाः प्राणिनो भवंति। ...............

यौवनमदेनोत्सिक्तचेतसो हितमिदमहितमिदमित्याहारविहारं च न गणयंति। प्रतिहतमनोरथाः क्रोधचिंताद्वेगमत्सरै-राक्रम्यन्ते। आत्मनो बलाबलं कार्याणां शक्याशक्यतां चा-चिंतयित्वा कामार्थहेतोर्देहवाक्चेतांसि निरन्तरं क्षिणोत्वा-नक्तं दिवं व्यापारयंति। एवमयथाबलारंभात् यथोक्तलक्षणं पित्तं प्राणिनमाक्रमति। एवमेव क्रमेणैवोत्तरोत्तरं दौर्बल्यात् मनोऽनवस्थानात् चिंताशोकजागरादिभिः स्नेहसंक्षयात् अहर्पूर्विकया वातगुणाः प्राणिनमाविशंति। एवं यथोक्तैः कारणैस्तस्मिंस्तस्मिन् वयोविशेषे दोषाणां न्यूनाधिक्यं भवति। दिनरात्रिभुक्तविशेषेण श्रूयमानं परिवर्तनं प्रागुक्त-प्रायमेव

शिष्यः— अपरः संशयः; कोष्ठलक्षणं "स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च हृदुंडुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते॥" इत्युक्तं। दोषाश्चाधोमध्योर्ध्व संनिविष्टाः। एवं स्थिते कथमग्निवत्कोष्ठोऽपि चतुर्विध इत्युच्यते। यथोक्तलक्ष-णस्य कोष्ठस्य भागे यस्मिन्व्यवस्थितस्तन्मयाद्गुणाः स्युः पित्तस्थाने पित्तस्य, वातस्थाने वातस्यैवं स्थिते कोष्ठः कथं चतुर्विधो भवतीत्युक्तम्। . . . .

आचार्यः — उच्यते यदा हि कोष्ठे वायोर्गुणानां भूयस्त्वं ~~तदा~~
तदा क्रूरकोष्ठा भवंति प्राणिनः। एवमेव पित्तगुणोद्रेकात् मृदु-
कोष्ठाः कफोत्कर्षेण मध्यकोष्ठाः। यथामानं स्थितैस्त्रिभिर्दोषैः-
मध्यकोष्ठाः प्राणिनः। वायो रूक्षगुणेन क्रूरः पित्तस्य तीक्ष्णोष्ण-
गुणाभ्यां मृदुः श्लेष्मणः स्निग्धगुणेन मध्यः कोष्ठः। तदुक्तं संग्रहे
"कोष्ठः क्रूरो मृदुर्मध्यो मध्यः स्यात्तैः समैरपि।।" क्रूरः कोष्ठः कृच्छ्रात्
श्यामादिभिर्विरिच्यते। मृदुः कोष्ठः क्षीरद्राक्षादिना विरिच्यते। ~~कृ~~
मध्यः कोष्ठो दुःखं विरिच्यते। दोषसाम्येन मध्यः कोष्ठः सुखेन
विरिच्यते। एतत्समासेनोक्तम्। तदेवाल्पशो विस्तरेण कथयामि।
कषायरसः शीतः स्तंभनो रूक्षश्च सर्वात्मना वातेन तुल्यगुणः।
वातगुणेषु रूक्षगुणोऽङ्गप्रत्यंगव्यापी शोषणश्च स च कोष्ठाव-
यवानां आमाग्निपक्वादीनां स्थानानि शोषणशक्तित्वात्
शोषयति स्तंभयति (मार्दवाभावं करोति) तस्मात् क्रूरकोष्ठानां
वमनद्रव्याणि विरेचनद्रव्याणि वा कृच्छ्रादपि सम्यग्वामयितुं
विरेचयितुं वालं भवंति। एतदभिप्रायेणैव संग्रहे संक्षिप्तलक्षण-
मुक्तं "प्रभूतमारुतः क्रूर इति" स च क्रूरकोष्ठो रूक्षस्तंभन-
विरोधिना ———

उपक्रमेणोपस्कृतः सुविरेच्यः सुवाम्यश्च भवति। औष्ण्यं पित्तस्य गुणः स्वेदनं चौष्ण्यकार्यं। स्तंभनविपरीतं स्वेदनं। स्वेदनेन शरीर-मार्दवमुपजायते। औष्ण्यं च सर्वगात्रव्यापी तेन च पित्तप्रकृतयो मृदुसुकुमारगात्राः कोष्ठस्यापि मृदुत्वात् दुग्धं द्राक्षं वान्यद्वा यत्किंचिदीषत्सरविशिष्टं द्रव्यं तन्मृदुकोष्ठं शोधयितुमलं भवति। अतएव संग्रहे उक्तं "बहुपित्तो मृदुः कोष्ठः क्षीरेणापि विरिच्यते॥ कफश्च स्निग्धशीतगुरुमंदविशिष्टस्तस्मात् वातपित्ताभ्यां स्तिमित एव वेगस्तस्मात् सर्वाणि कार्याणि कफस्य मंदगत्या चिरेण भवंति। कफप्रकृतौ कफाधिक्यं। स्निग्धगौरवमांद्ययोगात् श्लेष्मा दुःखेनोत्क्लिश्यते। अत एवोक्तं "श्लेष्माधिकेच्छर्द्यते दुःखं विरिच्यते च दुःखेन। अत एव श्लेष्मणो विलयनशोषण-कारीणि कटुतिक्तकषायात्मकानि द्रव्याणि वामयितुं विरेच-यितुं च प्रयोक्तुमुपदिष्टानि। समकोष्ठः सुविरेच्यः कथं तदुच्यते- वातकफयोः रूक्षस्निग्धगुणौ परस्परविरुद्धौ। त्रयाणां दोषाणां साम्येन समकोष्ठस्तस्मात् पित्तस्य धर्म एव सरः सः ~~समको~~ समकोष्ठेऽवशिष्यते। रूक्षस्निग्धगुणौ नात्मकार्यं कर्तुं प्रभवतः।

उत एव समवातपित्त(कफ)प्रकृतेः कोष्ठसंज्ञया मध्यः।

शिष्यः— दोषाणां साम्यमारोग्यं, दोषवैषम्यं रोगः। (दोषसाम्येन स्वास्थ्यं असाम्येन दोषाणामस्वास्थ्यं) स्वस्थानां यथा वन्मानभव-स्थिता आतुराणां वैषम्यं गता इति प्राप्तं। कोष्ठस्तु चतुर्विध इत्युच्यते। तर्हि कथमरोगेषु चतुर्विध कोष्ठत्वं संभाव्यते

आचार्यः— अथच पूर्वोक्त प्रकृति विवरणेनायं संशयः परिहृतो भवेत् चरकेऽप्युक्तं " समपित्तानिल कफाः केचिद्गर्भादि मानवाः॥ दृश्यंते वातलाः केचित् पित्तलाः श्लेष्मलास्तथा॥" ये समवात-पित्तश्लेष्माणो जंतवस्ते मध्य कोष्ठाः। नहि सर्वे जंतवः समवातपित्त-श्लेष्माणो विषमाहारोपयोगित्वात्। तस्मात् येषां प्रकृतौ ~~पित्त-मधिकं~~ विशेषेण वायुस्ते वातप्रकृतयः। येषांच प्रकृतौ पित्त-मधिकं ते पित्तप्रकृतयः। येषांच प्रकृतौ श्लेष्मा भूयिष्ठस्ते श्लेष्मप्रकृतिकाः। एते दोषविशेषेण त्रिविधा जंतवो नित्या-तुरा एव। येच समवातपित्तश्लेष्माणस्ते तत्वतो निरामयाः। तेषामिदं ~~विशेष~~ विज्ञानं वातप्रकृतिकानां वातनिमित्ताः व्याधयो बलवंतो भवंति(*) सुश्रुतेप्युक्तं। वातप्रकृतिकानां तिक्तोषण कषाय रसानां सेवनात् लंघन जागरादिभिश्चे-तरेभ्यो भावेभ्यः क्षिप्रं वायुः प्रकोपमापद्यते। न तथा पित्तकफौ। पित्तप्रकृतिकानामपि क्षारान्ल तीक्ष्णादीनां-

(*) (पित्तप्रकृतिकानां पित्तनिमित्ता व्याधयो बलवंतः श्लेष्मप्रकृतिकानां श्लेष्मनिमित्ता व्याधयो बलवंतो भवंति)

सेवनात् सूर्याग्नितापेनच पित्तं क्षिप्रं प्रकुप्यति न तथा वातकफौ। एवं कफप्रकृतिकानामपि स्वाद्वम्ललवणादीनामुपसेवनात् गुर्वतिस्निग्ध शीतादिकारणैश्च श्लेष्मा-प्रकोपमापद्यते। एतैर्यथोक्तैर्लक्षणैर्विज्ञेयाः। एतस्मादेव कारणात् चतुर्विधाः कोष्ठाः। एकदोषप्रकृतयोजंतवो नित्यातुरा अपि न व्याधिमनुगण्यंते। आजन्मसात्म्यात् न ते विशेषकारणमन्तरेण पीडाकरा भवंति। तत्तद्दोष-वर्धनादन्नपानव्यपचारान् नसहंते। अल्पेनैव कारणेन तत्त-द्दोषप्रकृतौ स दोषः क्षिप्रं संचीयते क्षिप्रंच कुप्यति न तु क्षिप्रं निवर्तते।

प्रकृतिविज्ञानं समाप्तम्

०×०

विकृतिविज्ञानं तृतीयं प्रकरणं

१

आचार्यः— शरीरधारणोपयोगित्वेन वातपित्तकफा रसरक्त मांसमेदोऽस्थिमज्जाशुक्राणि मलाश्च धातुसंज्ञां लभंते। तत्र दूषणै-हेतुभिः प्रथमं तावत् वायुः पित्तं कफो वा कारणानुरूपं एको वा द्वौ वा त्रयो वा विक्रियन्ते। तत्पश्चात् धातून् मलान् वा दूषयंति। अन्येषां दूषणं रसादिभ्यो न भवत्यत एवोक्तम् " धातवश्च मलाश्चापि दुष्यन्त्येभिर्यतस्ततः॥ वातपित्तकफा ह्येते त्रयो दोषा इति स्मृताः॥

शिष्यः— शरीरधारणे सर्वे वातादय उपयुज्यंते। एवं स्थिते रसादिभावेषु शरीरसंस्थेषु सत्सु कथं वातादय एव प्रथमं दुष्यन्ति नान्ये रसादयः।

आचार्यः— वातपित्तकफाश्च सर्वशरीरचराः। रसादिमलांतेषु धातुषु तथांगप्रत्यंगेषु नास्ति कुत्राप्यसूक्ष्मोऽपि भागो यं वातादयो व्याप्नुवन्ति। तस्मात् शरीरस्यान्तर्बहिश्च यत्रकुत्रापि स्थूलसूक्ष्मेषु विकृताविकृतेषु भावेषु सति विकारहेतौ विक्रियन्ते। न तथाऽन्ये धात्वादयोऽसर्वगामित्वात्

शिष्यः— अत्र संक्षिप्योक्तं वातादीनां दुष्टिप्रवृद्धिकारणं।

'समानगुणाभ्यासो वृद्धिकारणं विपरीतगुणाभ्यासो ह्रासकारणमिति। तानि कारणानि प्रति वातादिभेदं श्रोतुमिच्छामि।
आचार्यः— शृणु कथयामि "तिक्तोषणकषायाल्परूक्षप्रमितभोजनैः॥ धारणोदीरणनिशाजागरात्युच्चभाषणैः॥ क्रियातियोगभीशोकचिंताव्यायाममैथुनैः॥ ग्रीष्माहोरात्रिभुक्तांते प्रकुप्यति समीरणः॥ पित्तं कट्वम्लतीक्ष्णोष्णपटुक्रोधविदाहिभिः॥ शरन्मध्याह्नरात्र्यर्ध विदाहसमयेषु च॥ पित्तं वर्धते। स्वाद्वम्ललवणस्निग्ध गुर्वभिष्यंदि भोजनैः॥ आस्यासुप्रसुखाजीर्ण दिवास्वप्नातिबृंहणैः॥ प्रच्छर्दनाद्ययोगेन भुक्तमात्र वसंतयोः॥" पूर्वाह्णे पूर्वरात्रे च श्लेष्मा वर्धते। एभिरेव संसृष्टैः कारणैर्दोषाः संसृज्य वृद्धिमाप्नुवंति। एवमेव यथोक्त-दोषवृद्धिहेतुभ्यो विपरीतगुणधर्माहेतवस्तैर्हेतुभिस्तत्तद्दोषक्षयो भवति। स्वस्थवृत्तमप्याचरतां प्राणिनां कालमार्गस्वाभाव्यात् भूयमानेन सोमसूर्यानिलगति परिवर्तनेन शरीरे दोषाः संचयं वृद्धिं प्रसरं प्रकोपमापद्यन्ते। तद्यथा - उष्णगुणोपाहितैस्तीक्ष्णादिगुणैः शरीरे वायुः संचीयते। ग्रीष्मे च शर्वरीणामल्पत्वाद्वासराणां दीर्घत्वात् आदानकालेन च जगतः स्नेहसंक्षयात्....

तिक्तोषणकषायाणां रसानां बलीयस्त्वात् वायुरेव क्रमशः संचीय-
मानो वृद्धिमाप्नोति। तस्मिन्काले औष्ण्यातिशयात्र वृद्धो वायुः
प्रकोपमापद्यते। व्यायामनिद्राल्पत्वादिकारणै दुर्बलो देहो वायु-
मवकाशं ददाति। ततो वर्षासु मेघवृष्ट्यनिलैः शीतैः शांततापे
महीतले सत्युष्णगुणापकर्षात्तदा वायुः प्रकोपमापद्यते (शीत-
गुणोपहिता रूक्षादयो गुणाः प्रकोपमापादयंति) एवं शीतगुणो-
पहितास्तीक्ष्णादयः पित्तं संचयमापादयंति। उष्णगुणयुक्तास्ती-
क्ष्णादयो गुणाः पित्तं प्रकोपयंति। वर्षासु मेघवृष्ट्यनिलादीनां
शैत्यात्र वर्षासु पित्तं कुप्यति वर्धते एव। निवृत्तकार्येषु मेघेषु
तीक्ष्णकिरणो रविः प्रकाशते। वर्षाशीतोचितांगानां सहसाऽर्क-
रश्मिसंतप्तानां पित्तं प्रकुप्यति वर्षाजानेत-शीतापगमात्। शीतगुणो-
~~पहिता~~ पहिताः स्निग्धादयो गुणाः श्लेष्मणश्चयं कुर्वंति। उष्णगुण-
युक्ताः स्निग्धादयो गुणाः श्लेष्माणं प्रकोपयंति। विसर्गकाले स्निग्धा-
म्ललवणा बालिनः। एते श्लेष्मवर्धना अपि " देहोष्माणं विशंतोन्तः
शीते शीतानिलाहताः॥ जठरे पिंडितोष्माणं प्रबलं कुर्वतेऽनलम्॥
तस्मिन्काले बृंहणानि गुरुष्णस्निग्धाम्ललवणप्रधानान्युपयुक्तानि
द्रव्याणि न कफं कोपयंति। अग्नेस्तैक्ष्ण्यात् शरीरगतानां

बाष्पानां च रसानां घनीभावात्। वसंते शैत्यापगमात् औष्ण्यं वर्धते तच्च घनत्वेन संचितं स्निग्धादि गुण युक्तं कफं द्रवतां नयति [दृश्यते च "स्निग्ध द्रव्याणि विलयं गच्छन्त्युष्णस्पर्शादिति) तेनच कोपो भवति। कोपो नाम दोषाणामुन्मार्गगमनं। दोषाणां संचयो वृद्धिश्च स्वस्थाने एव भवति। उष्णगुणोपहिताः स्निग्धादयो गुणा वातं शमयंति। शीतगुणोपहिता मंदादयः पित्तं शमयंति। उष्णगुणोपहिता रूक्षादयो गुणाः कफं शमयंति। कालस्वाभाव्यादेव दोषाश्चयप्रकोपशमानापद्यन्ते। अकाले सद्यो दोषाः कारण-विशेषैश्चयं प्रकोपं च गच्छंति।

शिष्यः— वृद्धानामेषां दोषाणां कानि लक्षणानि

आचार्यः— वृद्धा हि दोषाः स्थाने स्थाने लिंगानि दर्शयंति। कार्श्य कार्ष्ण्य गात्रकंप ग्रात्र स्फुरणोष्णकामित्व संज्ञा स्वापनाश-बलेंद्रियोपघातास्थिशूल मज्जाशोषण मलसंगाध्मानाटोपमोह दैन्य-भय शोक प्रलापादिभिर्लक्षणैर्वृद्धो वायुः पीडयति। पीतता ग्लानींद्रियदौर्बल्यौजोविस्रंसशीताभिलाष दाहतिक्तास्यत्व तृष्णा मूर्च्छाऽल्पनिद्रता क्रोधादिभिर्लक्षणैः पित्तं वृद्धमिति विजानीयात्।

श्वैत्यशैत्यालस्य स्थौल्य गौरवांगसाद स्रोतःपिधान मूर्च्छा निद्रा
तंद्रा श्वास कास प्रसेक हृल्लासाग्निसाद संधि विश्लेषादीनि चिन्हानि
वृध्दः कफो दर्शयति। यथोक्तानि लक्षणानि स्वैः स्वैः सर्वैर्गुणै-
र्वृध्दा दोषाः स्वानि स्वानि लक्षणानि दर्शयंति। अल्पबला अल्पानि।
इदमेव तात्पर्यं कारणानुगुणानि दोषाणां लक्षणानि भवंति।
शिष्यः— वृध्दानां दोषाणां लक्षणशः कृतं विवेचनं। अतःपरं
कैर्लक्षणैर्दोषाणां क्षैण्यं लक्षयेत्।
आचार्यः— प्रसेकारुचि हृल्लास संज्ञा मोहाल्प वाक्चेष्टताप्रहर्षाग-
सादाग्निवैषम्यादिलक्षणैर्वायुं क्षीणं विजानीयात्। स्तंभशैत्यानि-
यततोददाहारोचकाविपाकांगपारुष्य कंपगौरव नखनयन शौक्ल्या-
दिभिः पित्तं क्षीणमिति विद्यात्। भ्रमोद्वेष्टनानिद्रांगमर्दपरिशोष-
तोदद्रवदाहस्फोटन वेपन धूमायन संधिशैथिल्य हृदयद्रवश्लेष्माशय-
शून्यतादीनि क्षीणस्य श्लेष्मणो लक्षणानि। वृध्दाः क्षीणाश्च दोषाः
समास्तस्तैस्तैर्लक्षणैर्बोध्दव्याः। "कुर्वते हि रुचिं दोषा विपरीत-
समानयोः॥ वृध्दाः क्षीणाश्च भूयिष्ठम्॥ वृध्दाः स्वानि रूपाणि
दर्शयंति। क्षीणाश्च स्वानि लिंगानि त्यजंति। समाः स्वं स्वं कार्यं
यथावत्कुर्वंति" यएव देहस्य समाहिताय तएव दोषा विषमा वधाय॥

यस्मादतस्ते हितञ्चर्यं यैन क्षतयाद्विवृद्धेरिवरक्षणीयाः॥"
"कषायकटुतिक्तानि रूक्षशीतलघूनिच॥ यवमुद्गप्रियंगूंश्च
वातः क्षीणोऽभिकांक्षति। तिक्तमाषकुलत्थादि पिष्टान्नविकृतिं
तथा॥मस्तुशुक्तामृतकाणि कांजिकञ्च तथा दधि॥ कट्वम्ललवणो-
ष्णानि पित्तक्षीणोऽभिकांक्षति॥ मधुरस्निग्धशीतानि लवणाम्ल-
गुरूणिच॥ क्षारञ्चापि दिवास्वप्नं कफक्षीणोऽभिकांक्षति।
द्रव्यं तुल्यं विशिष्टंहि संस्वं वृद्ध्यैक्षयायच"॥ दोषानुरूपं
जिह्वायां रुचिभिन्नत्वं कपिलमतेन। कट्वम्ललवणं पित्तं स्वाद्वम्ल
लवणः कफः॥ कषायतिक्तकटुको वायुर्दृष्टोऽनुमानतः॥ वृद्धि-
क्षयविभेदतश्च भेदा वक्ष्यंते॥ पृथक्त्रीन् वृद्धिसंसर्गस्त्रिधा
तत्र तु तान्नव॥ त्रीनेव समया वृध्या षडेकस्यातिशायिने। त्रयो-
दश समस्तेषु षड्द्वयेकातिशायेन तु॥ एकं तुल्याधिकैः षट्च
तारतम्यविकल्पनात्॥ पंचविंशतिरित्येवं वृद्धैः क्षीणैश्च तावतः॥
एकैकवृद्धिसमता क्षयैः षट्ते पुनश्च षट्॥ एकक्षयद्वंद्ववृध्या
सविपर्यययापिते॥ भेदा द्विषष्टिनिर्दिष्टास्त्रिषष्टिः स्वास्थ्यकारणं॥
एतच्चरकादिग्रंथेषु भूयांसो भेदाः संसर्गतः संनिपाततश्च

भवंति ते सर्वे दोषाणामंशांशकल्पनयाऽध्यवसीयाः। तथाच "विकारनामाकुशलो न जिह्रीयात्कदाचन॥" दोषाज्ञानार्थं चिकित्सायोगार्थंच विभ्रमो नस्पृशेत, इत्येव कारणाद्दोषाणामन्योन्यावरणानि पंचानां वातानांचान्योन्यावरणानिच लक्षणशश्चरकोपदिष्टानि प्रदीयन्ते। ..................

"मारुतानां हि पंचानां अन्योन्यावरणं शृणु॥ लिंगं व्याससमासाभ्यामुच्यमानं मयानघ॥ प्राणो वृणोत्युदानादीन् प्राणं वृण्वंति तेऽपिच॥ उदानाद्यास्तथान्योन्यं सर्व एव यथाक्रमात्॥ विंशतिर्वरणान्येतान्युल्बणानां परस्परम्॥ मारुतानां हिपंचानां तानि सम्यक्प्रतर्कयेत्॥ सर्वेंद्रियाणां शून्यत्वं ज्ञात्वा स्मृतिबलक्षयम्॥ व्याने प्राणावृते लिंगं कर्म तत्रोर्ध्वजत्रुकम्॥ स्वेदोहर्षस्त्वग्दोषः सुप्तगात्रता॥ प्राणे व्यानावृते तत्र स्नेहयुक्तं विरेचनम्॥ प्राणावृते समाने स्युर्जडगद्गदमूकताः॥ चतुष्प्रयोगाः शस्यन्ते। स्नेहास्तत्र सयापनाः॥ समानेनावृतेऽपाने ग्रहणीपार्श्व वेदना॥ शूलंचामाशयेतत्र दीपनं सर्पिरिष्यते॥ शिरोग्रहः प्रतिश्यायो निःश्वासोच्छ्वास संग्रहः॥ हृद्रोगोमुखशोषश्चाप्युदाने प्राण संवृते॥

ततोर्ध्वभागिकं कर्म कार्यमाध्मासंततथा॥ कर्मौजो बलवर्णानां
नाशो मृत्युरथापि वा॥ उदानेनावृते प्राणे तं शनैः शीतवारिणा॥
सिंचेदाश्वासयेच्चैव सुखं चैवोपपादयेत्॥ ऊर्ध्वगेनावृतेऽपाने
छर्दिश्वासादयो गदाः॥ स्युर्वाते तत्र बस्त्यादि भोज्यं चैवानुलोमनम्॥
मोहोऽल्पोऽग्निरतीसार ऊर्ध्वगेऽपानसंवृते॥ वातेस्याद्वमनं तत्र
दीपनं ग्राहि चाशनम्॥ वम्याध्मानमुदावर्तं गुल्मार्तिपरिकर्तिकाः।
लिंगं व्यानावृतेऽपाने तत्स्निग्धैरनुलोमयेत्। अपानेनावृते व्याने
भवेद्विण्मूत्ररेतसाम्॥ अतिप्रवृत्तिस्तत्रापि सर्वं संग्रहणं मतम्॥
मूर्छा तंद्रा प्रलापोऽङ्गसादोऽग्न्योजोबलक्षयः॥ समानेनावृते व्याने
व्यायामो लघुभोजनम्॥ स्तब्धताल्पाग्निता स्वेदचेष्टाहानिर्निमीलितं॥
उदानेनावृते व्याने तत्र पथ्यं मितं लघु॥ पंचान्योन्यावृतानेवं
वातान् बुध्येत लक्षणैः॥ एषां स्वकर्मणां हानिर्वृद्धिर्वावरणे मता।
यथास्थूलं समुद्दिष्टमेतदावरणे पृथक्॥ सलिंगभेषजं सम्यक्
शृणुत्वं बुद्धिवृद्धये॥ मूर्छा दाहो भ्रमः शूलं विदाहः शीतकामिता।
छर्दनं च विदग्धस्य प्राणे पित्तसमावृते॥ ष्ठीवनं क्षवथूद्गार-
निःश्वासोच्छ्वाससंग्रहः॥ प्राणे कफावृते रूपाण्यरुचिश्छर्दिरेव च॥

मूर्च्छा यानिच रूपाणि दाहोनाम्पुरसोः क्रमः॥ ओजो भ्रंशश्चसादश्चा-
प्युदाने पित्तसंवृते॥ आवृते श्लेष्मणोदाने वैवर्ण्यं वाक्स्वरग्रहः॥
दौर्बल्यं गुरुगात्रत्वमरुचिश्चोपजायते॥ अतिस्वेदस्तृषा दाहो
मूर्च्छा चारुचिरेवच॥ पित्तावृते समाने स्यादुपताप स्तथोष्मणः॥
अस्वेदो वह्निमांद्यंच लोमहर्षस्तथैवच॥ कफावृते समाने स्यात्
गात्राणांचातिशीतता॥ व्याने पित्तावृते तु स्यात् दाहः सर्वांगगः क्लमः॥
गात्रविक्षेपसंगश्च ससंतापश्च सवेदनः॥ गुरुता सर्वगात्राणाम्
सर्वसंध्यस्थिजा रुजः॥ व्याने कफावृते लिंगं गतिसंगस्तथारुजः॥
हारिद्रमूत्रवर्चस्त्वकूतापश्च गुदमेढ्रयोः॥ लिंगं पित्तावृतेऽपाने
रजसः संप्रवर्तनम्॥ भिन्नामश्लेष्म संसृष्टगुरुवर्चः प्रवर्तनम्॥
श्लेष्मणा संवृतेऽपाने कफमेहस्यचागमः॥(१) एवं दोषाणां —
संसर्गतश्च संनिपाततश्च वृध्दिक्षयौ, अन्योन्यावरणानिच ज्ञात्वा
रोगविनिश्चये रोगप्रतीकारक्रियायांच विद्वांसो न मुह्येयुः।
शिष्यः— दोषा रोगहेतवः, जाठराग्नेर्वैकृत्यं दोषदुष्टिमूलकमेव,
अग्निवैकृत्यादामसंभवस्तस्यैव चरकेणाम विषसंज्ञा। तत्
शरीरभागे यत्र तत्र संसक्तं भवति[आमाशये पक्वाशये बस्तौ

हृदये पुप्फुसे मूर्धनि नेत्रे रसे रक्ते मांसे चेत्यादिभागावयवे]
तत्रतत्रतांस्तान् विकारान् कुरुते। तच्चान्नविषं पित्तेन संसृष्टं
दाहं तृष्णां मुखामयानम्लपित्तमन्यांश्च पित्तजान् विकारान् कुरुते।
कफेन संसृज्यमानं यक्ष्म पीनस मेहादीन् विकारान् वातसंसृष्टं
वातगदान् मूत्रसंसृष्टं मूत्रगदान् शकृद्गतं कुक्षिरोगान्
रसादिभिः संसृज्यमानं रसजान् रक्तजानि साहि। एवमन्न-
विषं रोगहेतुरिति सिध्यति। दोषा रोगहेतवोऽन्नविषं (आमः)
च रोगहेतुः। अन्नामस्य दोषाणां कीदृशः संबंधः। अन्नदोषभेदेना-
मस्यैविध्यं, उत दोषसंगे नामस्त्रिविधान् विकारान् जनयति।
दोषाणामामस्य च किमप्यस्ति संबंधः, येन च दोषाणां सामत्वं
निरामत्वं च ज्वरादिषु वर्णितम्।

आचार्यः— दोषमूलमेवामस्त्रैविध्यं तदुच्यते रूक्षगुण-
प्रधानो वायुः रूक्षगुणकषायरसयोरन्योन्यात्मकत्वं जागरा-
तिलंघनातिव्यायामादीनामुपसेवनात् रूक्षगुणाधिक्ये वायु-
र्वर्धते रौक्ष्याच्च शरीरे कषायत्वं कषायरसस्य शोषणसंकोचा-
दीनि कार्याणि। तेन चाग्नेः पाचकांशानां मार्गसंकोचादा-
माशये यथावत् प्राप्नुवन्ति। ........

हीनाच्च शनैः शनैर्नान्नं यथावत्पच्यते। ततः क्रमतः संचितमन्नविषं रौक्ष्यकषाययोगाच्छुष्कप्रायं भवति। एवं स्वकारणैर्वृद्धस्य पित्तस्योष्णत्वस्नेहगुणातियोगादाशयः स्विन्नो मृदुर्भवति। तेन क्रममपहायैव पाचकद्रव्यं यौगपद्येनाशयं व्याप्नोति। यथाकालदर्वागेवागतं द्रव्यं नान्नं यथावत्पाचयति। यदन्नविषं तत्प्रायो द्रवतरस्वरूपमुत्पद्यते। आमाशयस्य क्लेदकातियोगात् क्रमेण पिच्छेन तितउसुषिराणीव पाचकांशमार्गाः संभ्रियन्ते। तेजोरूपस्य पाचकद्रव्यस्य यथावदयोगात् (आमाशयेऽनागमनात्) नान्नं यथावत्पच्यते। तन्यान्नविषं द्रवरूपमपि हेमन्तसलिलमिव घनस्वरूपम्। यथा दोषदुष्टिसमुद्भवमन्नविषं प्रायः स्वयोनिदोषमाश्रित्य तत्तद्दोषजान् तत्तदाश्रयभेदेन भिन्नभिन्नान् विकारान् जनयति। अत एवोक्तं

अजीर्णान्नरसाज्जातः क्रमतः संचितश्चयः॥
आमसंज्ञां स लभते शिरोगात्ररुजाकरः॥
आमेन तेन संपृक्ता दोषा दूष्याश्च दूषिताः
सामा इत्युपदिश्यन्ते ये च रोगास्तदुद्भवाः॥

शिष्यः— कथं च तेषां सामत्वं निरामत्वं चावगन्तव्यम्।

आचार्यः — उच्यते "वायुरामान्वयः सातिशयमान्त्रकूदसंचरः॥ वायुः सामो विबंधोऽग्निः सादतंद्रान्त्रकूजनैः॥ वेदनाशोथ निस्तोदैः क्रमशोऽगानि पीडयेत्॥ विचरेद्युगपच्चापि गृण्हाति कुपितो भृशं॥ स्नेहाद्यैर्वृद्धिमाप्नोति मेघसूर्योदये निशि॥"

"पित्तं सामं भवेदम्लं दुर्गंधं हरितं गुरु॥ आम्लिकाकंठहृद्दाहकरं श्याव तथा स्थिरम्॥" "आविलस्तंतुमांस्त्यानः प्रलेपी पिच्छिलः कफः॥ आलस्य तंद्राहृदयाविशुद्धिर्दोषाप्रवृत्याविलम्बनताभिः॥ गुरुत्वदत्वारुचिसुप्तताभिः सामान्वितं व्याधिमुदाहरन्ति॥" निरामो विशदो रूक्षो निर्गंधोऽल्पवेदनः॥ विपरीतगुणैः शान्ति स्निग्धैर्याति विशेषतः॥ निरामं पित्तमाताम्रमत्युष्णं कटुकं सरं॥ विगंधि रुचिकृद्वन्हिबलवर्धनमीरितम्॥ आमंजये लंघन कोष्णपेयालघ्वन्न सूपौदन तिक्तयूषैः॥ विरूक्षण स्वेदन पाचनैश्च संशोधनै रूर्ध्वमधस्तथैव च॥" यावच्चैषां सामत्वं नापनीयते न तावद्दोषाः शरीरान्निर्हर्तुं सुशकाः। यावत् वायौ सामत्वं तावत्स्नेहाद्यैर्वृद्धिमायातीत्यादि। एवमेव पित्तस्य कफस्य च बोद्धव्यम्। सामानां दोषाणां सामत्वापगमाय

प्रथमं लंघनस्वेदनकालयवागूतिक्तकरसानामुपयोगः कार्यः। आमे प्रयुक्तया लंघनपाचनादि क्रियया विकृतानां पूतिगंधत्वादीनामपगमात् दोषाः पक्वतामुपयांति। सामानां च लंघनपाचनादिक्रियया पच्यमानानां पक्वानां च दोषाणां तत्र तत्रोपवर्णनं कृतम्। सामानां दोषाणां भेषजं निग्रहेन समर्थं सामान् विकारानेन वर्धयति। वातदोषजनिताम्लविषं रसरुधिरमांसादिवहानां स्रोतसां संकोचाद् संचरणशीलं यत्र यत्र संसृज्यते तत्र तत्र शूलभेदतोदादीन् कुरुते। तज्जनितविकाराणां वैषम्यम्। पित्तदुष्टिजाम्लविषमतिद्रवोष्णभावात्स्रोतोमार्गाणामसन्निरोधादापादतलमस्तकं शीघ्रतरं संचरति। कफदोषजाम्लविषं घनभावात् शैत्यात् गुरुत्वात् मंदवेगं भवति। एवं विधैर्हेतुभिर्जायमानं दोषाणां वैषम्यं चरके संक्षिप्योक्तं तद्यथा

क्षयस्थानवृद्धैर्दोषैः षट्स्युर्हीनमध्याधिकैश्च षट्।
सैकैकैको विकारास्ते सन्निपातास्त्रयोदश॥

प्रकृतिस्थं यदापित्तं मारुतः श्लेष्मणः क्षये
स्थानादादाय गात्रेषु यत्र यत्र विसर्पति॥

तदा भेदश्च दाहश्च तत्र तत्रानवस्थितः॥ गात्रदेशे भवं ह्यस्य
श्रमो दौर्बल्यमेवच॥ साम्ये स्थितं कफं वायु क्षीणे पित्ते यदाबली
कर्षे कुर्यात्तदा शूलं सशैत्य स्तंभगौरवम्॥ यदाऽनिलं प्रकृतिगं
पित्तं कफपरिक्षये॥ संरुणद्धि तदा दाहः शूलंचास्योपजायते॥
श्लेष्माणं हि वनमं पित्तं यदा वातपरिक्षये॥ निपीड्यन्तेदा कुर्यात
सतंद्रा गौरवं ज्वरम्॥ प्रवृद्धो हि यदा श्लेष्मा पित्ते क्षीणे समीरणम्॥
रुंध्यात्तदा प्रकुर्वीति शीतकं गौरवं ज्वरम्। समीरणे परिक्षीणे
कफः पित्तं समत्वगम्॥ कुर्वीत संनिरुंधानो मृद्वग्नित्वं शिरोग्रहम्॥
निद्रां तंद्रां प्रलापंच हृद्रोगं गात्रगौरवम्। नखादीनांच पीतत्वं
ष्ठीवनं कफपित्तयोः॥ हीनवातस्य तु कफः पित्तेन सहितश्चरन्॥
करोत्यरोचकाऽपाकौ सदनं गौरवं तथा॥ हृल्लासमास्यस्रवणं
दूयनं पाण्डुतां मदम्॥ विरेकस्य हि वैषम्यं वैषम्यमनलस्यच॥
क्षीणपित्तस्य तु श्लेष्मा मारुतेनोपसंहितः॥ स्तंभं शैत्यंच तोदंच
जनयत्यनवस्थितम्॥ गौरवं मृदुतामग्नेर्भक्ताश्रद्धां प्रवेपनम्॥
नखादीनांच शुक्लत्वं गात्रपारुष्यमेवच॥ हीने कफे मारुतस्तु।
पित्तंतु कुपितं द्वयं॥ करोतियानि लिङ्गानि शृणु तानि समासतः॥

भ्रममुद्वेष्टनं तोदं दाहं स्फोटनमुत्तमम् ॥ अंगमर्दं परीशोषमा
दूयनं धूपनं तथा ॥ वातपित्तक्षये श्लेष्मा स्रोतांस्यपिदधत् भृशम् ॥
चेष्टाप्रणाशं मूर्च्छां च वाक्संगं च करोति हि ॥ श्लेष्मवातक्षये पित्तं
देहौजः स्त्रंसयच्चरत् ॥ ग्लानिमिन्द्रियदौर्बल्यं तृष्णां मूर्च्छां क्रियाक्षयं ॥
पित्तश्लेष्मक्षये वायुर्मर्माण्यति निपीडयन् ॥ प्रणाशयति संज्ञां च
वेपयत्यथवा नरम् ॥" दोषाणामेकैकशो लक्षणानि ~~प्रागुप~~
प्रागुपदिष्टानि। वायोः कषायरसता वर्णः श्यावोऽरुणोऽपि वा ॥
कटुकाम्लरसं पित्तं तस्य वर्णः पांडुरारुणवर्जितः ॥ श्लेष्मणो
वर्णः श्वेतो रसौ स्वादुलवणौ, इति यत्संक्षेपतः प्रोक्तं तस्य
सम्यगुपपत्तिमद्विवेचनं चरके सुश्रुते च कृतमेव। अयमेव
विषयः छांदोग्यबृहदारण्यकाद्युपनिषत्सु वर्णितः। तद-
नुरोधेन च ~~[illegible]~~ भगवत्पूज्यपादैराचार्यैर्भाष्ये विस्तरेण
विवृतो न्यायकंदलीविवरणादिषु च व्याख्यातः। तस्य
दिङ्मात्रनिर्देशः क्रियते। किमिति वायोरेव कृष्णवर्णः पित्तस्य
पाण्डुरारुणवर्जितः श्लेष्मणश्च श्वेत इति। संदिह्य सम्यगुप-
पत्त्या विवेचितम् ~~[illegible]~~। यच्च वायो-
र्द्वौ वर्णौ उक्तौ श्यावोऽरुणश्चेति स्वमानावस्थितो वायुः....

अरुणं वर्णं भासयति। विकृतश्च कृष्णम्। तन्त्रान्तरे च "तत्रारुणा-वातवहेति, उपनिषदि च योगशास्त्रज्ञैः पञ्चानां वातानां पञ्च निगदिताः। तद्यथा- "रक्तवर्णो मणिप्रख्यः प्राणवायुः। इन्द्रगोपसमप्रभोऽपानः। "समानस्तु द्वयोर्मध्ये गोक्षीरधवलप्रभः॥" अविकृतश्च वायुरेवं रूपः। विकृतस्तु पञ्चात्मा शरीरान्तर्बहिश्च श्यावं वर्णं भासयति। कषायरसो हि स्वैः सर्वैर्गुणैर्वायुवर्धनः। भूम्यनिलभूयिष्ठैर्द्रव्यैः कषायो रस उत्पद्यते। कृष्णवर्णः पृथ्वीसमुद्भवः। कारणानुविधायित्वात्कार्यमपि कारणसदृशं भवति। एवमेवानुभूयते च वातवृद्धौ मूत्रजिह्वास्यनेत्रादिषु कृष्णता। पित्तश्लेष्मणोरपि वर्णौ सम्यग्विवेचितौ (विकृताविकृतौ) विस्तर-भयान्नालिख्येते।

## ॥ चतुर्थं प्रकरणम् ॥ (चिकित्सा)

शिष्यः— वैषम्यं गता वातादयो रोगकारणमिति सर्वप्रमाण संसिद्धो-
ऽयमर्थः। वैषम्यं नाम वातादीनां न्यूनत्वमाधिक्यं वा। तत्र वैषम्यं
प्राप्ता दोषाः कथं प्रकृतिभावमापादयितव्या इत्यत्र विस्तरतः श्रोतुमिच्छामि।
"वृद्धिः समानैः सर्वेषां विपरीतैर्विपर्ययः॥" इति सामान्योपदेशेन
न यथावत् ज्ञानं भवति। ये च दोषाणां गुरुमंद हिम स्निग्धादयो गुणा
उक्तास्तेषां क्षयो वृद्धिर्वा वैषम्यहेतु। तद्विपरीतगुणानामौषधान्न-
विहाराणामभ्यासाद्दोषवैषम्यमपगच्छति। एतद्युक्त्या संगच्छते तथापि
नैकांतिकोऽयं सिद्धांत इत्यवभासते।

आचार्यः— कुतोऽनैकान्तिकः?

शिष्यः— जागरातिभाष्यातिकारणैः रूक्षगुणसेवनाद्वा प्रवृद्धगुणा-
द्वायोर्जायमाना विकाराः केवलं स्नेहगुणभूयिष्ठद्रव्येण नोपशाम्यंती-
ति दृश्यते। रूक्षादिगुणविशिष्टः "वायुः सामो विबंधोऽग्निः साद-
तंद्रांत्रकूजनैः॥ वेदनाशोथनिस्तोदैः क्रमशोऽङ्गानि पीडयेत्। विचरे-
द्युगपच्चापि गृह्णाति कुपितो भृशम्॥ स्नेहाद्यैर्वृद्धिमायाति मेघ-
सूर्योदये निशि॥" इति श्रूयते तस्मादनैकांतिकः सिद्धान्त इत्युक्तं।

आचार्यः— सत्यापि रूक्षगुणविशिष्टे वातजनिते विकारे यत्र च

स्नेहादीनां प्रवृत्तिर्यत्र च निवृत्तिः तत् संक्षिप्योच्यते। यदा चान्येना-
संसृष्टो वायुः रूक्षगुणोत्कर्षेण शरीरे वर्तते तदा केवलेन स्नेहेन
(स्नेहोपयोगेन) तद्रौक्ष्यमभिभूयते। दोषप्रकोपाणां हेतुबाहुल्यात्
देशकालवयोऽवस्थाविशेषाच्च रसादिधात्वाशयानांच संसर्गात्
दोषाणां रोगाणांच भूयमानानां विविधतां मनसि कृत्वायुर्वेदशा-
स्त्रे भूतसर्गोपवादै रुच्चावचत्वेनोपक्रमो निर्दिष्टः। यदुक्तं वायुसामो
विबंधोऽग्निरिति तत्रोपयुक्तः स्नेहो न हिताय भवति, उतान्यथा वायो-
र्बलिनावहतीति। इयमत्र युक्तिः 'आमान्वयस्य वायोः प्रशमनार्थं
इषल्लंघनमामपाचनंच [दुरालभामृतामुस्तादिना मस्य वायोः पाचनं
प्रयोक्तव्यम्। उक्तलक्षणे वायोर्निरामत्वं ज्ञात्वा तदनन्तरं स्नेहः
स्नेहोपगद्रव्यं (औषधान्नविहाराः) वा प्रयोक्तव्यम्। एवमेव सर्वत्र
ऊह्यम्।

शिष्यः— आस्तामेतत्, स्वस्वगुणवृध्दिक्षयाभ्यां दोषा वैषम्यं
प्राप्नुवन्ति। व्याधींश्च जनयन्ति। तत्र दोषाः कथं प्रकृतिभावमापा-
दयितव्याः। कथंच व्याधिषु प्रतिकर्तव्यमिति विस्तरेण श्रोतुं कामये।

आचार्यः— कालस्वाभाव्यात् (ऋतुविपर्ययादिकारणात्) आ-
हारादिदोषेण वा विषमा दोषाः स्नेहस्वेदपूर्वकैः पंचकर्मभिः —

साम्यमापादयितव्याः (वृध्दा दोषाः क्षपयितव्याः समाः पालयितव्या इति सामान्यः सिध्दांतः)। अल्पदोषाणां लंघनं मध्यमदोषाणां लंघन-पाचनमति प्रवृध्ददोषाणां लंघनं शोधनंच। एतत्त्रयं चरकेऽपतर्पणमिति संज्ञितम्।

शिष्यः – किंच लंघनस्य शोधनस्यच लक्षणम्।

आचार्यः – उच्यते "शरीरलाघवकरं यद्द्रव्यं कर्म वा पुनः॥ तल्लंघनमिति ज्ञेयम्॥" तथाच "यदीरयेत् बहिर्दोषान् पंचधा शोधनं तु तत्॥" यद्यपि लंघनं वातकरं तथापि "तृड्दोषिणां प्रमूढानां स्निग्धाभिष्यंदिबृंहिणाम्॥ शरीरे लंघनं शस्तमपि वातविकारिणाम्॥

शिष्यः – बहुदोषाणां व्याधीनां शोधनं दोषहरमित्युक्तं तर्हि जातमात्रे व्याधौ किं न सर्वत्र सहसैव शोधनं प्रशंसंति

आचार्यः – शब्दमात्रेण तंत्रस्य केवलस्यैकदेशिकाः॥ भ्रमन्त्यल्पबलास्तंत्रे, तस्मादविमृश्यकारिताऽनर्थवहाः विज्ञाय चिकित्सितं कुर्वीत। "प्रायस्तिर्यग्गता दोषाः क्लेशयंत्यातुरांश्चिरम्॥ तेषु न त्वरया कुर्यात् देहाग्निबलवित्क्रियाम्॥ प्रयोगैः क्षपयेत्तान् सुखं वा कोष्ठमाहरेत्॥ ज्ञात्वा कोष्ठप्रपन्नांस्तान् यथासन्नं हरेत् बुधः॥

अत एवोक्तं "वृद्धिस्थानक्षयावस्थां रोगाणामुपलक्षयेत्।
व्याध्यवस्थाविशेषांश्च ज्ञात्वा कुर्यादिति क्रियाम्॥"

शिष्यः— क्रमेण चयं प्राप्तानां दोषाणां क्रमेण विनिवर्तनमुक्तम्। येच बलवद्भिः कारणैः काले वि काले वा सद्यश्चयादीन् प्राप्य व्याधीन् जनयन्तीति यत्तत्र संशयः। सहसैवोपजातानां व्याधीनां भेषजबलादपगमे सति दोषशेषः कथमवशिष्यते।

आचार्यः— नात्र दोषाणां क्रमवृद्धिः सद्यो वृद्धिर्वा सन्निकृष्टं विप्रकृष्टं वा कारणं दोषशेषत्वे हेतुर्भवति। शाखागता हि दोषा दुर्निर्हरा भवन्ति। नवभिर्मार्गैरेव वृद्धानां दोषाणां अवसेचनं भवति। कोष्ठस्थितानामेव। शाखागतानामन्योन्यस्थानगतानां च दोषाणां सतां दोषावसेचनमयुक्तम्। तस्मादेव दोषाणां सुखनिर्हरणार्थं तान् कोष्ठमानीय निर्हरेत् इत्युक्तम्। कोष्ठगता हि दोषा यस्यां कस्यामप्यवस्थायां निर्हर्तव्या एव।

शिष्यः— यदनुष्ठाय प्रायो व्याधिभयमपगतं स्यात् तद्वक्तव्यम्।

आचार्यः— चय एव जयेद्दोषमित्युक्तम्। उक्तलक्षणैर्दोषाणां चयं वृद्धिं च विज्ञाय "श्रावणे कार्तिके चैत्रे मासि साधारणे क्रमात्।
ग्रीष्मवर्षाहिमचितान् दोषानाशु समुद्धरेत्॥"

शिष्यः— कानि च सामान्यतो लक्षणानि चयं गतानां दोषाणाम्।

आचार्यः— संचितानां दोषाणां इमानि लिंगानि भवन्ति। स्तब्ध-पूर्णकोष्ठता पीतावभासताऽङ्गानां गौरवमालस्यं चयकारण-विद्वेषश्च। एष एव रोगाणां प्रागुत्पत्तेः प्रथमः क्रियाकालः।

शिष्यः— अन्यदनुपृच्छ्यते संचितानां दोषाणां निर्हरणे श्रावणः कार्तिकश्चैत्रश्चेति कालस्य नियमने को हेतुः॥

आचार्यः— अत्यावश्यकमेव कालस्य नियमनम्। उक्तकालदन्यः कालः कथं न युक्तस्तदुच्यते अष्टांगसंग्रहे "शीतकालेऽतिमात्र शीतोपहतत्वात् शरीरमत्यर्थं शीतवातविष्टब्धबद्धगुरुदोषं भवति। तदनुप्राप्तं च भेषजं संशोधनार्थमुष्णस्वभावमपि शीतो-पहतत्वात् मंदवीर्यतां गतमयोगाय कल्पते। शिशिरं च वातप्रायो-पद्रवाय। तद्वर्षास्वपि समंतादतिघनेन घनसंघातेनाकुलेनभसु-परुद्धतेजःप्रकरेषु दिनकरकरेषु जलदपटलप्लावनोद्दामकर्दमायां भूमौ अत्यर्थोपक्लिश्यमानस्थानलमलमुद्रिक्तमलजलभाजन-दुर्बलं शरीरं भवति। औषधग्रामस्तु जलदोदरप्रततप्रमुक्तधारासंपात-संभृतांबुनिवहोपप्लावितमूलजालसारविटपो बहलकोमलपल्लवो-पचितस्कंधशाखः पुनरिव बालतामुपगतोऽल्पवीर्यो भवति।

उपरि संस्थिततयाच्च क्षितिमलप्रायाभिरम्लविपाकाभिः खग-
मृगसरीसृपादिगात्रधातुमूत्रपुरीषसंसृष्टाभिरद्भिः सलिलशीकरा-
नुविद्धशिशिरपवनसंपृक्तेन च धराधरोष्मणा कोमलत्वादपरिण-
तस्यास्य सुतरां विदाहो जायते। तत्र साधारणपथ्यतामुपगतो
भूयः प्रयोगाय। प्रथमसंगृहीतमपि चौषधं तोयदतोयानुगतमारु-
तोपहते जगतीति। ग्रीष्मे पुनरादानोपहतत्वाच्छरीरमुष्णस्वभ-
वातातपाध्मातमतिस्विन्नमतिशिथिलमतिप्रविलीनदोषं भवति।
भेषजं पुनरनुष्णमपि तपनतरतपनकरनिपातादुष्णवीर्यतीक्ष्णता-
मुपगतमतियोगायोपकल्पते। शरीरं च पिपासाश्रमक्लमोपहतम्
तस्मात्साधारणेष्वेव तदन्तरालेषु वमनादीनि योजयेत्। नचे-
दात्ययिको व्याधिः। आत्ययिके तु कृत्रिमगुणोपधानेन यथर्तु
गुणविपरीतेन संयोगसंस्कारप्रमाणविकल्पैश्चोपपादितौषध-
मवहितोऽवचारयेत्।

शिष्यः— चय एव जयेद्दोषमिति यदुक्तं तत्र कैरुपायैर्दोषा
जेतव्याः।

आचार्यः— चितान् वृद्धान् क्षीणान् वा दोषान् प्रकृतौ स्थाप-
यितुं च जातानां च विकाराणां प्रशमनाय च सामान्यतः स्नेह-

स्वेदपूर्वाणि पंचकर्माणि दोषजयोपायत्वेन प्रयुक्तानि

शिष्यः — कानिच पंचकर्माणि किमर्थंच प्राक्ताभ्यां स्नेहस्वेदौ प्रयोक्तव्यौ।

आचार्यः — तानीमानि पंचकर्माणि " तद्यथा वमनं रेचनं नस्यं निरूहश्चानुवासनम्॥ एतानि पंचकर्माणि कथितानि मुनीश्वरैः॥" स्नेह्याः शोधयितव्याश्च रूक्षा वातविकारिणः॥ व्यायाममद्यस्त्री नित्याः स्नेह्याः स्युर्येच चिंतकाः॥" स्नेहमग्रे प्रयुंजीत ततः स्वेदमनंतरम्॥ स्नेहस्वेदोपपन्नस्य संशोधनं॥" इति चरके " वातानुलोम्यं दीप्तोऽग्निर्वर्चः स्निग्धमसंहतम्। मार्दवं स्निग्धता चांगे स्निग्धानामुपजायते॥" अयमत्र निष्कर्षः — स्नेहसारोऽयं पुरुषः प्राणाश्च स्नेहभूयिष्ठाः, वमनादीनि संशोधनानि क्लेशकारीणि। स्निग्धानां पुरुषाणां शरीरावयवानक्लेश्य वमनादीनि सुखेन दोषान् निर्हरंति। अन्यच्च स्निग्धांगाः पुरुषाः स्वेदसहा भवंति। स्निग्धस्विन्नानां गात्रं मार्दवमुपयाति। " सुश्रुतेचोक्तं तद्यथा — स्नेहक्लिन्ना धातुसंस्थाश्च दोषाः स्वस्थानस्थाये च मार्गेषु लीनाः॥ सम्यक्स्वेदैर्योजितैस्ते द्रवत्वं प्राप्ताः कोष्ठं यांति देहाद्दोषात्॥" स्निग्धं स्विन्नं वमनं पाययितव्यम्। सम्यक्

स्निग्धस्विन्नाय वान्ताय च विरेचनं देयम्। स्नेहस्वेदाभ्याम-
विभावितशरीरेण पीतं वमनं विरेचनं वा क्रमेण सम्यगूर्ध्वमधो
वा नाभ्येति दोषांश्चोत्क्लिश्याध्मानहृदयग्रहतृष्णामूर्च्छादिविकारैः
पीडयति। एतत्पंच कर्मभ्यः प्राक् स्नेहस्वेदयोः प्रयोजनं संक्षिप्त-
तत्त्वतो निर्दिष्टम्।

शिष्यः — स्नेहस्वेदपूर्वकाणां पंच कर्मणां प्रवृद्धदोषा व्याधिताश्च
पुरुषाः सर्वे एवार्हाः, उतास्ति तेषामर्हानर्हत्वम्।

आचार्यः — अस्ति तत्रैवं प्रविभागः। केषां स्नेहो हितः केषामहितः।
के च स्वेद्याः के चास्वेद्याः के च वाम्याः के चावाम्याः के विरेच्याः
के चाविरेच्याः। आस्थाप्याः अनास्थाप्याश्च के, अनुवास्याः अन-
नुवास्याश्च के, केषां नस्यं हिताया हिताय वा भवति। एतत्
विमृश्य लोकहिताय पंच कर्माण्युपदिष्टानि तद्यथा —

स्वेद्य संशोध्य मद्यस्त्री व्यायामासक्तचिंतकाः॥
वृद्धबालाऽबलकृशा रूक्षाः क्षीणास्त्ररेतसः।
वातार्तस्यंदतिमिरदारुणप्रतिबोधिनः॥ स्नेह्याः।
नत्वाति मंदाऽग्नि तीक्ष्णाग्नि स्थूलदुर्बलाः।
ऊरुस्तंभातिसाराम गलरोगगरोदरैः॥
मूर्च्छाछर्द्यरुचिश्लेष्म तृष्णामद्यैश्च पीडिताः॥

स्नप अप प्रस्वृता युक्तेच नस्ये बस्तौ विरेचने ॥

"श्वासकास प्रतिश्याय हिध्माध्मान विबंधिषु ॥
स्वरभेदाऽनिलव्याधि श्लेष्माम स्तंभ गौरवे ॥
अंगमर्द कटीपार्श्व पृष्ठ कुक्षि हनुग्रहे ॥
महत्वे मुष्कयोः खल्यामायामे वातकंटके ।
मूत्रकृच्छ्रार्बुद ग्रंथि शुक्राघाताढ्य मारुते ।
स्वेदं यथायथं कुर्यात तदौषध विभागतः ॥ "

"नस्वेदयेदतिस्थूल रूक्षदुर्बल मूर्छितान् ॥
स्तंभनीय क्षत क्षीण क्षाम मद्य विकारिणः ॥
तिमिरोदर वीसर्प कुष्ठ शोषाढ्य रोगिणः ॥
पीत दुग्ध दधि स्नेह मधून्कृत विरेचनान् ॥
भ्रष्ट दुग्ध गुदग्लानि क्रोध शोक भयान्वितान् ॥
क्षुत्तृष्णा कामला पाण्डुमेहिनः पित्तपीडितान् ॥
गर्भिणीं पुष्पितां सूतां मृदु चात्ययिके गदे ॥ "

"नवज्वरातिसाराघः पित्तास्रग्राज यक्ष्मिणः ॥
कुष्ठमेहापची ग्रंथि श्लीपदोन्माद कासिनः ॥
श्वास हृल्लास वीसर्प स्तन्य दोषोर्ध्व रोगिणः ॥
विशेषेण वामयेत ॥ "

“ अवम्या गर्भिणी रूक्षः क्षुधितो नित्यदुःखितः ।।
बालवृद्धकृशस्थूल हृद्रोगि क्षतदुर्बलाः ।।
प्रसक्तवमथुप्लीह तिमिर क्रिमि कोष्ठिनः ।।
ऊर्ध्वप्रवृत्तवाय्वस्र दत्तबस्ति हतस्वराः ।।
मूत्राघात्युदरी गुल्मी दुर्वमोत्यग्निरर्शसः ।।
विरेकसाध्यागुल्मार्शो विस्फोटव्यंगकामलाः ।।
जीर्णज्वरोदरगरच्छर्दिप्लीहहलीमकाः ।।
विद्रधिस्तिमिरं काचः स्यंदः पक्वाशयव्यथा ।।
योनिशुक्राशया रोगाः कोष्ठगाः कृमयो व्रणाः ।।
वातास्रमूर्ध्वगं रक्तं मूत्राघातः शकृद्ग्रहः ।।
वम्याश्च कुष्ठमेहाद्याः ।। ”

“ नतु रेच्यो नवज्वरी ।
अल्पाग्न्यधोगपित्तास्र क्षतपाय्वतिसारिणः ।।
सशल्यास्थापितक्रूर कोष्ठातिस्निग्ध शोषिणः ।। ”
“ गुल्मानाहरुजुड प्लीह शुद्धातीसारशूलिनः ।।
जीर्णज्वर प्रतिश्याय शुक्रानिलमलग्रहान् ।।
बध्नाश्मरीरजोनाशान् दारुणांश्चानिलामयान् ।। ”
“ अनास्थाप्यस्त्वतिस्निग्धः क्षतोरस्को भृशं कृशः ।।
आमातिसारी वमिमान् संशुद्धो दत्तनावनः ।।

कास श्वास प्रमेहार्त्तो हिध्माध्मानाल्पवर्चसः॥
शूलपाण्डुः कृताहारो बद्धच्छिद्रो दकोदरी॥
कुष्ठीच मधुमेहीच मासान् सप्तच गर्भिणी॥"

—०×०— ०×०—

"स्निग्ध स्विन्नोत्तमांगस्य प्राक्कृतावश्यकस्यच
निवात शयनस्थस्य जत्रूर्ध्वं स्वेदयेत् पुनः।
अथोत्तानर्जुदेहस्य पाणिपादे प्रसारिते॥
किंचिदुन्नत पादस्य किंचिन्मूर्धनि नामिते॥
नासापुटं पिधायैकं पर्यायेण निषेचयेत्।
उष्णाम्बुतप्तं भैषज्यं प्रनाड्या पिचुनाथवा॥"
'प्रातः श्लेष्माणि मध्याह्ने पित्ते सायं निशोऽनिले॥
वाताभिभूते शिरसि हिध्मायामपतानके।
मन्यास्तम्भे स्वरभ्रंशे सायं प्रातर्दिने दिने॥,
नस्यं प्रयोजयेत्

—०×०— ०×०—

"तोयमद्यगरस्नेह पीतानां पातुमिच्छताम्।
भुक्तभक्तशिरस्नात स्नातुकाम स्रुतासृजाम्॥
नवपीनस वेगार्त सूतिका श्वास कासिनाम्।
शुध्दानां दत्तबस्तीनां तथा नार्तव दुर्दिने॥
अन्यत्रात्ययिकाद्व्याधेः—
योजयेन्नतु नावनम्॥"

—०×— ०×—

"विरेचनं बृंहणं च शमनं च त्रिधाऽपि तत्॥", इति नस्य प्रकारा।

"विरेचनं शिरःशूलजाड्यस्यंदगलामये॥
शोफगंडकृमिग्रंथिकुष्ठापस्मारपीनसे।
बृंहणं वातजे शूले सूर्यावर्ते स्वरक्षये॥
नासास्यशोषे वाक्संगे कृच्छ्रबोधेऽवबाहुके॥
शमनं नीलिकाव्यंगकेशदोषाक्षिराजिषु॥"

स्नेहस्वेदवमनादीनां पंचकर्मणां कुशमुक्तत्वं कुशाऽमुक्तत्वं तदुक्तम्। तथाप्यन्यदुच्यते - स्नेहादीनामतियोगात् हीनयोगाच्च भूयमानाः व्यापदः (विकाराः) सप्रतीकारा उपवर्णिताः। अस्निग्धे स्नेहितेऽस्वेद्ये स्वेदितेऽवाम्ये वामितेऽविरेच्ये विरेचितेऽनास्थाप्ये स्थापिते इत्येवं, पंचकर्मणां ~~विकल्पेप्पमोगात्~~ (हीनातिमात्रमिथ्यायोगात्) काः काः कति कथं च व्यापदो भवंति तद्यथावत् वर्णितम्। दिङ्मात्रं प्रदर्श्यते। तद्यथा "—
स्नुक्तेऽजो मुखस्रावो गुददाहः प्रवाहिका॥ पुरीषातिप्रवृत्तिश्च भृशस्निग्धस्य लक्षणम्॥ स्नेहस्य हीनयोगात् किं भवति तदुच्यते तद्यथा "पुरीषं ग्रथितं रूक्षं वायुरप्रगुणो मृदुः॥ पक्ता खरत्वं रौक्ष्यं च गात्रस्यास्निग्ध लक्षणम्॥ उरो विदह्यते वायुः कोष्ठादुपरिधावति॥ दुर्वर्णो दुर्बलश्चैव रूक्षो भवति मानवः॥ स्वेदनातियोगस्य लक्षणम्। पित्तप्रकोपो मूर्च्छा च शरीरसदनं तृषा॥ दाहस्वेदांगदौर्बल्यम् अतिस्विन्नस्य लक्षणम्॥

संधिपीडा ज्वरः श्यावरक्तमण्डलदर्शनम्। स्वेदातियोगाच्छर्दिश्च ॥"
स्वेदायोगस्य लक्षणम् " अंगमार्दवं, गौरवम्" वमनातियोगस्य
लक्षणम् तद्यथा- "वमनस्यातियोगे तु फेनचन्द्रकरक्तवत् ॥ वमितं
क्षामता दाहः कण्ठशोषस्तमो भ्रमः ॥ घोरा वाय्वामया मृत्युर्जीवशो-
णितनिर्गमात् ॥ वमनायोगस्य लक्षणम् " वेगानामप्रवर्तनम्।
प्रवृत्तिः सविबन्धा वा केवलस्यौषधस्य वा ॥ अयोगस्तेन निष्ठीव-
कण्डूकोठज्वरादयः ॥ विरेचनस्यातियोगस्य लक्षणम्" विट्पित्तकफ-
वातेषु निःसृतेषु क्रमात् स्रवेत् ॥ निश्लेष्मपित्तमुदकं श्वेतं कृष्णं स-
लोहितम् ॥ मांसधावनतुल्यं वा मेदःखण्डाभमेव वा ॥ गुदनिःसरणं
तृष्णा। भ्रमो नेत्रप्रवेशनम् ॥ भवन्त्यतिविरिक्तस्य तथातिवमनामयाः ॥
विरेचनायोगस्य लक्षणम् — हृत्कुक्ष्यशुद्धिररुचिरुत्क्लेशः श्लेष्मपित्तयोः ॥
कण्डूर्विदाहः पिटिका पीनसो वातविड्ग्रहः ॥ ~~अयोगलक्षणम्~~
आस्थापनस्य हीनोऽतिहीनातियोगौ स्नेहस्य हीनातियोगवत् ज्ञेयौ।
"आस्थाप्यं स्नेहितं स्विन्नं शुद्धं लब्धबलं पुनः ॥ अन्वासनार्हं विज्ञाय
पूर्वमेवानुवासयेत् ॥ स्नेहनावनातियोगस्य लक्षणं – कण्डूः गुरुता
प्रसेकः, अरुचिः, पीनसः। स्नेहनावनस्य हीनयोगस्य लक्षणं
अक्ष्णोः स्तब्धता शोषो नासास्ये, मूर्ध्नि शून्यता। एवमेव धूमादि-
कर्माणि बोद्धव्यानि ॥

शिष्यः— पंचकर्माणि कुत्र प्रयोक्तव्यानि कुत्र न प्रयोक्तव्यानि
तेषां हि हीनातियोगाध्या ज्ञाताः। एषां सम्यग्योगान् ज्ञातुं कामये।
आचार्यः— उच्यते, वातानुलोम्यं दीप्तोऽग्निर्वर्चः स्निग्धमसंहतम्॥
मार्दवं स्निग्धता चांगे स्निग्धानामुपजायते॥" सम्यक् स्निग्धस्य लक्षणं—
शीतशूलव्युपरमे स्तंभगौरवनिग्रहे॥ संजाते मार्दवे स्वेदे स्वेदना—
द्विरतिर्मता॥ "निर्विबंधं प्रवर्तंते कफपित्तानिलाः क्रमात्॥ मनःप्रसादः
स्वास्थ्यंचावस्थानं स्वयं भवेत्॥ वैपरीत्यमयोगानां ~~[illegible]~~
~~मैं~~ञ्जाति महती व्यथा॥ इति सम्यग्वान्तस्य लक्षणम्॥
सम्यग्विरेचनस्य लक्षणं— दौर्बल्यं लाघवं ग्लानि व्याधीनामणुतारुचिः॥
हृद्वर्णशुध्दिः क्षुत्तृष्णा काले वेगप्रवर्तनम्॥ बुध्दीद्रियमनःशुध्दि—
मारुतस्यानुलोमता॥ सम्यग्विरिक्तलिंगानि कायाग्नेश्चानुवर्तनम्॥
सम्यक् स्निग्धलक्षणवदास्थापनस्य सम्यग्योगो विज्ञेयः।
शिष्यः— विकृतमात्रेषु दोषेषु तेभ्यश्च जातमात्रेषु व्याधिषु पंच-
कर्माण्येवोपायत्वेन प्रयोक्तव्यानि उतास्ति चान्यत्साधनम्।
आचार्यः— प्रवृध्ददोषेषु विशेषतः पंचकर्माणि प्रयोज्यानि, नच
सर्वेषां सर्वोपायाः सर्वदा सुलभाः। अतएवोच्यमानमवधारय

स्निग्धेन गुणेन रुद्धेषु स्रोतःसु जाते गौरवे मूढतां गते चानिले (प्रातिलोमं गते सति). अपक्तौ सत्यां च लंघनमुपयोजयेत्। तत्रा- प्यस्ति लंघ्या लंघ्य विशेषः। तद्यथा- मेहामदोषाति स्निग्धज्वरोरु- स्तंभकुष्ठिनः॥ विसर्पविद्रधिप्लीह शिरःकंठाक्षिरोगिणः॥ स्थूलांश्च लंघयेन्नित्यं शिशिरे त्वपरानपि। ये बृंह्यास्ते न लंघनीयास्तद्यथा क्षीणाः क्षताः कृशा वृद्धा दुर्बला नित्यमध्वगाः। स्त्रीमद्यनित्यास्त्रीभेषु नरा न लंघनीयाः। शोषार्तग्रहणीदोषैर्व्याधिभिः कर्षिताश्च ये॥ शुद्धवातक्षयार्तांस्तु जीर्णज्वरिणश्च न लंघयेत्॥ अत्रापि पंचकर्मवत् सम्यक् हीनातियोगान् एवं लक्षणैर्जानीयात् तद्यथा- हृदयोद्गार- कंठास्य शुद्धौ तंद्रा क्लमे गते॥ स्वेदे जाते रुचौ चैव क्षुत्पिपासासहोदये॥ कृतं लंघनमादेश्यं निर्व्यथे चान्तरात्मनीति सम्यक् लंघित लक्षणम्। पर्वभेदोंगमर्दश्च कासः शोषो मुखस्य च॥ क्षुत्प्रणाशोऽरुचिस्तृष्णा दौर्बल्यं श्रोत्रनेत्रयोः॥ मनसः संभ्रमोऽभीक्ष्णं ऊर्ध्ववातस्तमो हृदि॥ देहाग्निबलनाशश्च लंघनेऽतिकृते भवेत्॥ लंघनीयानां विकार- प्रशमे हीनयोगं लंघनं ज्ञेयम्। (लंघिते स्वक्षिते सति लंघनं कृत- मिति, अस्वक्षितेऽकृतमिति ज्ञेयम्। केचिल्लंघनं नाम अनशनमिति मन्यन्ते तस्य विवेचनम्। द्विविधं हि लंघनं शोधनं शमनं च।

तत्रापि शोधनं पंचधा वमन विरेचनादिकम्। शमनं सप्तधा
'नशोधयति यद्दोषान् समान्नोदीरयत्यपि। समीकरोति विषमान्
शमनं तच्च सप्तधा॥ पाचनं दीपनं क्षुत्तृड्व्यायामातपमारुताः।
(पाचनं नाम— प्रतिपक्षक्षपणपूर्वं बलदानेन यज्जाठराग्निं दोषपचने
समर्थयति तत्पाचनम्) 'येषां मध्यबला रोगाः कफपित्तसमुत्थिताः॥
वम्यतीसारहृद्रोगविसूच्यलसकज्वराः॥ विबंधगौरवोद्गारहृल्लासा-
रोचकादयः॥ पाचनैस्तान् भिषक्तेषां प्रायेणादावुपाचरेत्॥
अतएवोक्तम्— लंघनंच्याल्पदोषाणां, लंघनपाचनं मध्यदोषाणामिति।

शिष्यः— यदुक्तं सर्वमेतदपतर्पणात्मकं, उपक्रमोऽच द्विविधौ संतर्पणो-
ऽपतर्पणश्चेति (तत्रापतर्पणं ज्ञातप्रायमस्ति, अथेदानीं संतर्पणस्य)
प्रयोजनं तत्रावधार्यते।

आचार्यः— उच्यते 'संतर्पणं नाम बृंहणम्। बृंहयेद्व्याधिभैषज्य-
मद्यस्त्रीशोककर्शितान्॥ भाराध्वोरःक्षतक्षीणरूक्षदुर्बलवातलान्॥
गर्भिणीसूतिकाबालवृद्धान् ग्रीष्मेऽपरानपि॥

सम्यक् बृंहितलक्षणम्— तद्यथा— "बलं पुष्ट्युपलंभश्च कार्श्यदोष-
विवर्जनम्॥ लक्षणं बृंहिते"। अपतर्पणसमुत्थानां व्याधीनां संत-
र्पणमुपशमः॥ संतर्पणसमुत्थानां व्याधीनां नापतर्पणमन्तरेणो-
पशमः।

—इदमुभयोरन्तरम् " दोषाणां बहुसंसर्गात् संकीर्यन्ते ह्युपक्रमाः ॥
—(रोगाणां दोषाणांच्च स्थान क्रियादेश काल वयोऽवस्थाऽऽहार विहारादि-
विशेषै विविधत्वात् उपक्रमोऽपि विविधः) उपक्रमाणां बहुत्वे सत्यपि
सर्वेऽपि ते षट्त्वं नातिवर्तन्ते। अतएवोक्तम् "लंघनं बृंहणं काले
रूक्षणं स्नेहनं तथा स्वेदनं स्तंभनं चैव जानीते यः स वै भिषक् ॥
लंघनं बृंहणं रूक्षणं स्नेहनं स्वेदनं स्तंभनं प्रत्येकमेतद्युग्मत्रयं
अन्योन्य प्रतिपक्षि। यान्येतान्युक्तानि लंघनादिनस्यां तानि तानि
त्रिदोष विज्ञानमन्तरेणोपयोक्तुं न शक्यानि। सर्वेषामुपक्रमाणां बस्ति-
रेव प्रधानतमः, उभयरूपत्वात् (संतर्पणमपतर्पणंच्चेत्युभयम्)
शीघ्रसुख बृंहणानुकारित्वात् विकृतानिलोच्छेदित्वाच्च। अनिलो हि
दोषाणां नेता स्वतंत्रः सर्वशरीरचेष्टैक कारणं पंचात्मकतया स
प्रत्यंगांगव्यापी। मार्गत्रय जातानां रोगाणां हेतुः सुखत्वादेव बस्तिः ॥
बालवृद्ध कृशस्थूल क्षीण धात्विंद्रियेष्वनिलोपसर्गादप्रजासु कृच्छ्र-
प्रजासुच्चोपयुज्यते। अग्निबलवर्णमेधास्वरायुः सुखप्रदः, वयःस्थापनः
पंगुरुग्ण भग्नस्तंभ संकुचितानिलाध्मानशूलारोचकोदावर्तपरिक-
र्तिकादिषुच्च हितः। "शरीरोपचयं वर्ण बलमारोग्यमायुषः॥ परि-
वृध्दिं करोत्येवः बस्तिः सम्यगुपासितः ॥" - - - - - - - - - - - -

अन्यच्च "बस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते। संसर्गे संनिपाते च बस्तिरेवहितः सदा॥" अतिवृद्धस्य कुपितस्य सर्वात्मना पीडयतो बलवतो वायोर्वेगं सोढुं बस्तिक्रियामन्तरेण नान्यः कतमोऽपि चिकित्सा-विशेषः क्षमेत। "वीर्येण बस्तिरादत्ते दोषानापादमस्तकात्॥ पक्वाशयाद्बस्तिवीर्यं स्वैर्देहमुपसर्पति॥ वृक्षमूले निषिक्तानां अपां वीर्यमिव द्रुमम्॥" बस्तिस्त्रिविधः;- आस्थापनं, अनुवासनं, उत्तरबस्तिश्च तेषां चेमे विशेषाः "निरूहः शोधनो लेखी स्नेहनो बृंहणो मतः॥
अ. सं. चान्ये विशेषाः — "उत्क्लेदनं, शोधनं, लेखनं, बृंहणं, वाजीकरणं, पिच्छाबस्तिर्मधुतैलिकश्च॥ दोषभेदोक्ताः सर्वे व्याधयो-बस्तिना परं नाशमुपयान्ति मूलच्छेदेन वृक्षवत्।

शिष्यः:- यथा हि बस्ति विशेषेण वाते वातप्रधाने वा विकारे प्रधानतम इत्युपदिष्टम्; तथा पित्ते पित्तविशेषे वा विकारे कतमः प्रधानः प्रतीकारः, तथा च श्लेष्मणि श्लेष्मप्रधाने वा विकारे कतमः प्रधानः प्रतीकारः।

आचार्यः— शृणुष्व — सर्वोपक्रमेभ्यः पित्ते पित्तप्रधानेषु वा विकारेषु विरेकं प्रशंसन्ति कुशलाः। विरेचनमादितएवामाशयं प्रविश्य केवलं वैकारिकं पित्तमूलं चापकर्षति। तेन च देहान्तर्गताः पित्तविकाराः शाम्यन्ति। मात्रां कालं च प्रमाणीकृत्य वमनं सर्वोपक्रमेभ्यः

श्लेष्मणि श्लेष्मप्रधानेषु च विकारेषु प्रधानतमं मन्यन्ते। वमनमादितः एवामाशयं प्रविश्य केवलं वैकारिकं श्लेष्म मूलं अपकर्षति तेन च तद्भवा विकाराः शाम्यन्ति। अपृष्टमप्यन्यत् किञ्चिदुच्यते दोषाणां विकाराणां प्रशमसमये प्राप्ते प्रथमं तावदेतद्विचिन्त्यं, अयं वायुः केन कारणेन वैषम्यं उपगतो वमनविरेचनादि कर्शन कर्मणा हीनयोगेनातियोगेन वा प्रजागरेण वा व्यायामेन प्रमितरूक्षशीताद्यशनेन वा शैत्येन वेत्यादि यथावदविमृश्य तदनुरोधेन प्रयुक्तो हेतुव्याधि विपरीतोपक्रमो रोगप्रशमनार्थं वायोः प्रकृतिस्थापनार्थं चालं भवेत्। एवमेव पित्तं किमिदं कुलित्थतैलपक्वक्षाराम्लतीक्ष्णोष्णादिविदाहि-पदार्थानामुपसेवनात् वा मध्यान्हातपचारेण वा क्रोधेन वोद्रिक्तमुताहो शीतगुर्वाद्याहारादिविशेषात् क्षीणं उताहो कालस्य हीनमिथ्यातियोगाद्वा क्षीणमेतद्यथावद्विमृश्योपक्रमेत। एवमेव कफ आस्यासुखेन शीतस्निग्धगुर्वादीनामाधिक्यं दिस्वदान्यानां वोपसेवया कालमाहिम्ना वा इत्यादि वृद्धिकारणैर्वृद्धं क्षीणं वा कफं ज्ञात्वा तद्विपरीतगुणद्रव्येणोपक्रमेत्।

शिष्यः— यश्च दोषाणामुक्त उपक्रमः स एव यत्र कुत्रापि शरीरस्य भागे (स्वस्थानेऽन्यस्थाने वा) प्रकुपितानां दोषाणां सतां प्रयोक्तव्यः उतास्ति विशेषः।

आचार्य:— अस्ति तत्र विशेष:, पित्तस्थानगते वायौ पित्तवत् प्रतीकार:, कफस्थानगतस्य पित्तस्यच कफवत्प्रतीकार:। वायो: स्थानगतस्य कफस्य वायुवत्प्रतीकार:,। अत्राप्यन्वेषणीयं "अन्यस्थानगतो दोष: स्थानिनो बलवान् यदि। कुर्याच्चिकित्सां तस्यैव (अत्रोदाहरणम् पित्तस्थानगते वायौ पित्तवत्प्रतीकार इत्युक्तं तस्यायमपवाद:, तद्यथा- पित्तस्थानगतो वायुर्यदि स्थानिन: (पित्तात् बलवांश्चेत् तर्हि तस्यैवोपक्रम:) वायोरेवोपक्रम एव मेवेति सर्वत्र ऊह्यम्। अन्यद् पृष्टमपि मुक्त्वा दुच्यते "हरेद्दोषांश्चलान् पक्वान् बलिनो दुर्बलस्यच॥ चला ह्युपेक्षितास्तेच कुर्वीरन्नपि देहिनाम्॥" दुर्बलस्य चलान् प्रभूतान् दोषान् अल्पान् अल्पान् हरेत्। अत्र नित्यं वैषम्यमुपगतानां दोषाणां प्रकृतिस्थापनार्थं रोगोपशमार्थंच प्रवृत्तेन भिषजेदं सम्यगवधार्यं कस्यायमौषधस्य व्याधिरातुरो वा कियत्प्रमाणं स्यच्चौषधस्य योऽस्ति इति। भैषज्यवीर्यप्रमाण विकल्पो व्याधिव्याधितबलापेक्षो वा दोषानुरूपो वा भवति। व्याधितानां व्याधीनांच बलमभिसमीक्ष्य सर्वचेष्टाप्रवर्तिनी सकलपुरुषार्थसाधिनी प्राणशक्तिर्लेशतोऽपि नापचीयेत तथैव सर्वमायुर्वेदशास्त्रे चिकित्सितमुपदिष्टम्।........

इदमेवायुर्वेदस्य प्रयोजनं यद्दीर्घायुष्ट्वं। तस्मात् व्याधीनां वा प्रवृद्ध दोषाणां वा निग्रहे हठात्कारेण मुक्तस्ते न च जीवन-शक्तिरपक्षीयते तस्मादल्पश एव दोषाणां निवर्तनं श्रेयस्करम् प्राणशक्तेः क्षयात् साध्यसंमता हि व्याधयो भैषज्यैर्न निवर्तन्ते। अभाहि चिंत्यमाने प्राणशक्तिरेव व्याधिनिवर्तिका सा चौषधान्न-विहारैः ससहाया चेत् व्याधिः शीघ्रमपवर्तते। यथा च भूमौ स्खलित्वा पतितः पुरुषोऽन्येन दत्तहस्तावलंबे त्वरितमुत्तिष्ठति। अन्यथा ईषदधिककालेनोत्तिष्ठेत्। अतो दोषा व्याधयो न प्रयोगौ-षधिबलात् घातनीया। यथाक्रमं च यं गता दोषाः व्यायामात् उष्मणस्तैक्ष्ण्यादहिताचरणाच्च कोष्ठात् शाखास्थिमर्माणि प्राप्य शरीरं व्याप्नुवन्ति। तथैव स्नेहस्वेदादिभिः शनैःशनैर्दोषाः कोष्ठं प्रापणीया निर्हरणीयाश्च। प्राणशक्तेरुपच्चय विधिरायु-र्वेदे विस्तरेणोपदिष्टोऽप्रकृतत्वान्नोपन्यस्यते। यथामनीष-मेतत्प्रकरणं विवेचितम्। प्रत्यक्षादर्शनात् न दोषाभाव किंचिदस्ति, इति प्रलपनमात्रं वाच्योनविषये नायुर्वेदस्य ज्ञानं। तत्तु अभ्यासवशात् बुध्यैकगम्यम् इति मया

त्रिधातुसर्वस्वमुद्दिश्य कृतोऽयमुद्यमः ।
यदत्र यत्कायुक्तं वेत्स्यन्त्येव महाधियः॥
लेखने बहवो दोषा विमर्षेन्चिततोऽधिकाः॥
परीक्षासमये ते हि क्लेशयेयुः परीक्षकान्

चतुर्थं प्रकरणं समाप्तम्

---

१

## उपसंहारः

एवमिदं सर्वप्रमाणसंसिध्दं त्रिदोषप्रकरणं यथाबुध्दिप्रसरं सूचीपत्रके निर्दिष्टानायुर्वेदीयग्रंथानालोच्य विवेचितम्। त्रिदोषविज्ञानमन्तरेणायमायुर्वेदो निरक्षः शकट इव चैतनावियुक्तः प्राणीव न लेशतोऽप्युपयोगाय भवेत्। आयुर्वेदः शास्त्रसंज्ञां नार्हतीति केचित् संगिरन्ति तदयुक्तम्। एकमपि तंत्रमनभ्यस्य आयुर्वेदो न दूषणीयः। सर्वेषां हि श्रेयःसाधनानां प्रज्ञापराधो नाम घोरः परिपंथी। प्रज्ञापराधादेवेमे यत्किंचित् प्रलपन्ति। प्रज्ञापराधो नाम- "बुध्या विषमविज्ञानं विषमंच प्रवर्तनम्॥ प्रज्ञापराधं जानीयात् मनसो गोचरं हितत्॥ अन्यच्च " धीधृतिस्मृतिविभ्रष्टः कर्म यत्कुरुतेऽशुभम्॥ प्रज्ञापराधं तंविद्यात् सर्वदोषप्रकोपणम्॥ उदीरणं गतिमतांमुदीर्णानांच निग्रहः॥ सेवनं साहसानांच नारीणांचातिसेवनम्॥ कर्मकालातिपातश्च मिथ्यारंभश्च कर्मणाम्॥ विनयाचारलोपश्च पूज्यानांचाभिधर्षणम्॥ ज्ञातानां स्वयमर्थानां अहितानां निषेवणम्॥ अकालादेशसंचारौ मैत्रीसंक्लिष्टकर्मभिः॥ इंद्रियोपक्रमोक्तस्य सद्वृत्तस्यच वर्जनम्॥ ईर्ष्यामानभयक्रोध लोभमोहमदभ्रमाः॥ तज्जं वा कर्म यत्क्लिष्टं यद्वा तदेह कर्मच॥ यच्चान्यदीदृशं कर्म

रजोमोहसमुत्थितम् ॥ प्रज्ञापराधं तं शिष्टा ब्रुवते व्याधिकारणम् ॥ एवञ्च
येषां प्रज्ञा नापराध्यति येचाभ्यस्ततन्त्रास्ते एवायुर्वेदोक्तमिदं तत्त्वं
युक्तं इदमयुक्तमिति वक्तुमीषदर्हन्ति। एवमपि तपःप्रभावादतीन्द्रियज्ञानै-
महर्षिभिरवहितेन मनसा विनिश्चितार्थमन्यथात्वेन प्रतिपादयितुं
प्रत्यक्षैकज्ञानसाधनानां विदुषां न शक्यम्। अत्रोदाहरणम्, रसनया
आस्वाद्य मधुरतरमिदं फलमिति, केनचिदुक्ते तत् हस्तेन स्पृष्ट्वा ताहो
निरीक्ष्य नेदं मधुरमिति यथाऽन्येन वक्तव्यं तथाऽयं प्रकारो भवेत्।
महर्षीणां ज्ञानसाधनं नीरजस्तमो मनः, अर्वाचीनानामस्माकं तु ज्ञान-
साधनमिन्द्रियगणः। तस्मात् संनिकृष्टमपि कुड्यतिरोहितं तमसा वा
तिरोहितं वस्तु दृशा न ज्ञायते। सत्यपि श्रवणेन्द्रिये पठतां कुमा-
राणां समानाभिहारात् पुत्रो वा पठति शिष्यो वेति न प्रत्यभिज्ञायते।
अन्यच्च खेचराणां गते गुणदोषौ न स्थलचरैर्ज्ञातुं शक्यौ
उभयोरपि गमनस्य साधनं भिन्नम्। तथा आयुर्वेदे
प्रतिपादितार्थानन्यथात्वेन प्रतिपादयितुं प्रत्यक्षैकज्ञान-
पराः न शक्ताः। आ तदनुष्ठापयितुं रुचिवैचित्र्यात्
देशभेदाच्च प्रणीतानि तत्त्वतः परस्परतो भिन्नभिन्नानि
अपि नवनवानि .......

स्वस्थानुरहितानि शास्त्राणि सर्वाण्यायुर्वेदेऽन्तर्भवन्ति। इत्येत-
च्चरक सुश्रुतादीनां ग्रंथानां परिशीलनेन सुस्पष्टं भवेत्। अर्वा-
ग्भवैर्विपश्चिद्भिः प्रकाशितादितिहासात् ज्ञायते चेतरेषामारोग्य-
शास्त्राणां आयुर्वेदः प्रसवभूमिरिति। अन्यच्च प्राचीने काले
"मृते तु गर्भे गर्भिण्या योनौ शस्त्रं प्रवेशयेत्। शस्त्रशास्त्रार्थविदुषि
लघुहस्ता भयोज्झिता॥" इत्यादिवचनैर्योषित्स्वात्मौपाधिकं
शस्त्रावचारणकौशल्यं आसीदित्यनुमीयते। श्रीहर्षचरिते च
रसायनो नाम कश्चिद्वैद्यकुमारो राजपत्न्याः समक्षं राज्ञः शरीरे
क्षुरांत्रे शस्त्रमवचार्य तमुल्लाघतां प्रापयामासेत्यस्तु। आयुर्वेदो-
पज्ञी विना ज्ञानमात्रेणायुर्वेदोक्त सिद्धांता न परीक्षणीयाः। इदम
तात्पर्यम्। अन्येषामारोग्यशास्त्राणां पूर्वैरस्माकमारोग्यशास्त्रैः
(आयुर्वेदीयग्रंथैः) तुलना नयुक्ता। उभयोरपि शास्त्रयोः साध्य-
मेकमेव (स्वास्थ्यानुपालनं, रोगोपशमश्च)। शत्रून् विजिगीषवो
केचित् वीराः खड्गेन युध्यन्ते केचित् धनुषा केचित् भिंदिपालैः
रित्यादि। बह्व्यस्तत्र सन्ति युद्धविद्याः "धनुर्विद्या, खड्गविद्या,
इत्यादयः। तासां सर्वासामपि साध्यमेकमेव शत्रुपराभव" इति
यदि केवल खड्गविद्याकुशलो ब्रूयात् न धनुर्विद्या शत्रुपराभवे

गरीयसी; खड्गविद्यैव, तर्हि तदयुक्तरूपं भवेत् न चापि तेन
धनुर्विद्यायाः शत्रुपराभवे लघीयस्त्वं स्यात्। खड्गविद्यैककुशलस्य
धनुर्विद्यायामपरिश्रमात्। एवमेवाभ्यस्तान्यारोग्यशास्त्रा आयुर्वेदस्यै-
कमपि तं त्रयमनभ्यस्य यदि ब्रूयुः "त्रिदोषविज्ञानं नामायुर्वेदे वृथाडंबर-
भूतं, न तदभ्यस्य कोऽपि स्वास्थ्यमनुपालयितुं रोगोपशमं वा विधातुं
समर्थो भवेत्,, इति, तर्हि न तद्युक्तं स्यात् न वा तेन त्रिदोषविज्ञानं
लघीयो भवेत्। यथा धनुर्विद्याप्रवीणः केवलखड्गविद्याकुशलेन
कृतां स्तुतिं निंदां वा मत्तालापमिव मन्येत तथैव केवलमन्य-
स्मिन्नारोग्यशास्त्रे कृतबहुपरिश्रमैः प्रतिपादितं त्रिदोष-
विज्ञानस्य प्रामादिकत्वं सम्यगभ्यस्तायुर्वेदा विद्वांसः प्रमत्त-
प्रलापतुल्यत्वात्तस्य, न मन्येरन्। अतः केवलमन्यान्यारोग्य-
शास्त्राण्यनभ्यस्य त्रिदोषविज्ञानं प्रामादिकं इति प्रतिपादयतां
वाग्विसर्गो न गणनामेवार्हतीति। न वयमन्येषामारोग्य-
शास्त्राण्यवजानीमः। आयुर्वेदे प्रतिपादितानि तत्त्वानि
न मिथ्यात्वेन बुद्ध्या द्रष्टव्यानीति ब्रूमः। सर्वात्मना सत्यानि
तानि श्रौतकालाद्यावन्नाविसंवादितां प्राप्तानि तानि
चेदानीन्तनेकाले कैश्चित् वाङ्मात्रेण तिरस्क्रियन्ते नच
दर्शयन्ति प्रयोगैर्विसंवादित्वम्। ..........

आयुर्वेदस्तु पांचभौतिकस्य देहस्य चराचरात्मकस्य चतुर्विधस्य भूतग्रामस्य त्रिविधस्य द्रव्यस्यच हिताहितत्वे कीदृशः कथंच संबंधस्तत्सर्वं त्रिदोषविज्ञानेन यथावद्दर्शयति। महता प्रमाणेन बहिःस्थिताः सोमसूर्यानिला विकृताऽविकृताः
हितं त्मि·
आहितं चानुरुध्यन्ते। तेषांशांशेन स्थिता व्यक्तिमाश्रित्य कफपित्ताख्यां गता अविकृताश्चेत् हितं विकृताश्चेत् अहित-मनुरुध्यन्ते। तेच यदा बहिश्चरा विक्रियन्ते तदा जनपदोध्वंस-कान् गदान् जनयन्ति। तेषां विकृताविकृतानां लक्षणानि हेतुपूर्वाणि जनपदोध्वंसनीयेऽध्याये चरके प्रदर्शितानि यच्चेदानींतने काले भारतीयेष्वनारोग्यमालर्कं विषमिव विस्तृतं दृश्यते। तत्रतु सर्वथाऽस्माकं प्रज्ञापराध एव मूलम्। हितमिद-महितमिदमिति बुध्वापि प्रज्ञां वंचयामः। प्रज्ञापराधस्य परां कोटिमापन्नाः स्मो भारतीयाः येनच कार्यमप्यकार्यवदवभासते। हितं त्यजामोऽहितं चाचरामः। प्रज्ञापराधो न कर्तारमेव संक्लिश्य विरमति प्रत्युत कदा कदा आसन्नमं कुलमवसादयति। तस्मात् शास्त्रकृद्भिः सनिर्बंधमुपदिश्यते; नहि प्रज्ञापराधकल्पो दीर्घजीवितस्य घोरः परिपन्थी। क्षुद्राणां स्वार्थप्रयुक्तानां

प्रज्ञाऽपराध्यति। परैश्चापराधान् कारयति। अधिगतपरमार्थ-
तत्त्वा मुमुक्षवो जना यथास्वमाचारं धर्ममर्थञ्च कामंच नोपेक्षंते
तथा भूयांसो भारतीयाः प्राज्ञैर्महर्षिभिरुपदिष्टं परिणामसुखमाचारं
न गणयन्तो धर्मार्थौ समुत्सृज्य परप्रज्ञानुपातिनः प्रायः पराननु-
कुर्वते गतिनिवभाषणाचारविचारकर्मभिः। सूत्रे मणिगणा इव भृत्य-
पदैकलाभध्येया भूयांसः शिक्षणसूत्रेण निबध्यमाना भवामः।
तेनच कविकुलपुंगवेन भारविणा प्रणीतं पद्यमन्वर्थयामः।
"विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः॥ नियता
लघुता निरायतेः ~~[illegible]~~ इति। सर्वेषां कष्टानां अना-
रोग्यं गरीयस्तरं। तस्यच दत्तास्पदोऽयं भारतो देशः। अतुल्य
शील शौचाहाराचारणा महाविदेशीं स्पर्शाभ्यवहारसहासनादिभिः
प्रज्ञापराधेनच सर्वार्थसुखसाधना प्राणशक्तिरपहीयते "स एव
भारो वोढव्यो वोढारं यो न सादयेत्" इत्युपदिष्टं तृणाय मत्वाऽसं-
पूर्णनिर्वधात्वात् नि प्राप्तव्यशक्तीनि ज्ञानकर्मेन्द्रियाणि प्रसह्य
व्यापारयामः। सर्वात्मना चतुर्विधभूतग्रामात्मकस्य चराचर-
स्य जगतो जीवनधारणगुणवीर्योत्पादनपोषणादीनि सोम-
सूर्यानिलेभ्योऽपि कुलेभ्यो भवन्ति।........

द्वितीयाष्टक अ. ८ व. ६८

सोमा पूषणा जनना रयीणां जनना दिवो जनना पृथिव्याः ॥
जातौ विश्वस्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिम् ॥
इमौ देवौ जायमानौ जुषन्तेमौ तमांसि गूहतामजुष्टा ॥
आभ्यामिंद्रः पक्वमामास्वन्तः सोमपूषाभ्यां जनदुस्रियासु ॥
सोमा पूषणा रजसो विमानं सप्तचक्रं रथमविश्वमिन्वम् ॥
विषूवृतं मनसा युज्यमानं तं जिन्वथो वृषणा पंचरश्मिम् ॥
दिव्य १ न्यः सदनं चक्र उच्चा पृथिव्यामन्यो अध्यन्तरिक्षे ॥
तावस्मभ्यं पुरुवारं पुरुक्षुं रायस्पोषं विष्यतां नाभिमस्मे ॥
विश्वान्यन्यो भुवना जजान विश्वमन्यो अभिचक्षाण एति ॥
सोमा पूषणाववतं धियं मे युवाभ्यां विश्वाः पृतना जयेम ॥
धियं पूषा जिन्वतु विश्वमिन्वो रयिं सोमो रयिपतिर्दधातु ॥
अवतु देव्यदितिरनर्वा बृहद्वदेम विदथे सुवीराः ॥
वायो ये ते सहस्रिणो रथासस्तेभिरागहि नि - · · · · · ·
युत्वान्सोमपीतये ॥

हृद्रोगं च मम नाशय हरिमाणं च नाशय (शारीरं रोगं)

श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि
श्रद्धायामपाने नि० · · · · · · ·

अत्यायाग् समाने नि० ......

प्राणो रक्षति विश्वमेजत्

अन्नं प्राणमन्नमपानमाहुः ....

बृहदारण्यकोपनिषदि "प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत् सर्वं प्राण एवेत्यादि।

या आपो दिव्या उत वा स्रवन्ति खनित्रिमा उत वा या स्वयंजाः॥ समुद्रार्था याः शुचयः पावकास्ता आपो देवीरिह मामवन्तु। (खनित्रिमाः खनित्रेण निवृत्ताः) स्वयंजाः (स्वयमुद्भूताः) समुद्रार्थाः (समुद्रगामिन्यः)

अतो महर्षिभिः स्तुत्यांतितामिदं 'चेतनाचेतनस्य जगतो हिताहितं सर्वात्मना सोमसूर्यानिलेषु प्रतिष्ठितमिति। यानि कानिचिदमेध्यानि विकृतान्यशुचीनि द्रव्याणि तेषु कानिचित् बहिश्चरेण प्राणमारुतेन कानिचित् सूर्यातपेन कानिचित् सलिलसंस्कारैः शुद्धिमाप्नुवन्ति। अर्केन्दुमारुतैरस्पृष्टं स्थलदोषेण वा विकृतं सलिलं अपेयं भवति तच्च सूर्यांशुतप्तं रोगघ्नं। श्वेतपीतरक्तनीलादिवर्णेषु सूर्यांशुभिः स्नापितं सलिलं विविधान् रोगान् नाशयितुमलं भवति। इत्यादि जलवर्णचिकित्साग्रंथात् ज्ञायते। एवमेव च योगशास्त्रे प्राणबलेन (मारुतबलेन) शारीरा मानसाश्च रोगाः क्षयं यान्ति। योगशास्त्रोक्तैरुपायैः (आसनादीनां प्रयोगैः) .... —

व्याधयः शाम्यन्तीति तज्ज्ञाः वदन्ति। विविधतपोविधिविशा-
रदाः प्राणयात्रार्थं सोमसूर्यानिलानुपायुंजंत। प्राणयात्रार्थं
सोमसूर्यानिलानुपयुञ्जानानां न प्राणशक्तिरपक्षीयते। अन्नानु
रूपां हि प्राणिनस्तनुं ऋद्धिं चोपचाप्नुवन्ति। सोमसूर्यानिलेषु
न यातयामत्वं कदापि संभवति। अस्यैवार्थस्यादिकविना
रामायणे श्लोको गीतः "अप्भक्षा वायुभक्षाश्च केचित्सूर्य-
मरीचिपाः॥ शुष्कपर्णाशनाः केचित् तेपिरे मुनयस्तपः॥
रामायणे, योग-वासिष्ठे योगसंबंध्युपनिषत्सु श्रीमन्महाभारता-
दिग्रंथेषु च आरोग्यं भास्करादिच्छेत् इत्यार्थस्य प्रतिपादकानि सन्ति बहूनि वाक्यानि। अलमति-
पल्लवितेन। श्रुतिस्मृतीहासायुर्वेदीयग्रंथादिभिरुपदिष्टं पूर्वैः
पूर्वतरैर्जनैः क्षुण्णमाचारं पृष्ठतः कृत्वा पंकिलेस्थले गच्छन्
पुरुषो यथा यथा शीघ्रं गन्तुं चेष्टते तथा तथाधिकं पंके
निमज्जति। एवं प्रज्ञापराधमूलं सर्वमप्रचारं अनारोग्यं
प्रज्ञापराधेनैवापवर्तयितुं प्रयतमानाः सुतरां रोगपंका-
र्णवे निमज्जामः। उक्तं च "यथाह्यनुदकानद्यो यथावाप्य-
तृणं वनम्॥ तथा राष्ट्रं तु विज्ञेयं यत्रारोग्यं न वर्तते॥"
परशूनां नालभूता वंशदण्डा यथा स्वकुलोत्सादनाय
परशूननुभवन्तो (सहायाः भवन्ति) तथा प्रज्ञाविक्रमोत्साह-
वैभवशालिनां अन्येषां सर्वारंभान् फलवतः कृत्वा

बलमायुर्धनमारोग्यमुद्योगांश्चात्मनो वियोजयामः। अना-
मयत्वं हि धर्मार्थकाममोक्षाणामन्येषां च कर्मणां साधक-
मित्यस्मिन्नर्थे न केषांचिदपि विसंवादोऽस्ति। ~~प्राचः आयु~~-
आयुर्वेदधर्मशास्त्रादिषु पूज्येषु ग्रंथेषूपदिष्टं आयुर्वेदीय ~~परि~~-
परिभाषया स्वस्थवृत्तं धर्मशास्त्र परिभाषयाऽऽचारं आचरंतः
प्रांचो यथाऽमितबलेन दीर्घायुषा स्वास्थ्येन चात्मानं सम-
युञ्जत तथा तमेवाचारं आचरन्तो भारतीयान् सुकालः
प्राप्नुयात् " एति जीवन्तमानन्दो नरं वर्षशतादपि ॥
अनामयत्वं संपादयितुं बहुभिः प्रयुक्ताः बहवः पन्थानो विद्यन्ते।
तेषु भारतीयानां कतमः श्रेयान् तत्परिषदा निर्णेतव्यम्
मम तु " यस्य देशस्य यो जन्तुस्तस्य तद्देशजौषधम् ॥
इति सूक्तरूपं प्रति भाति। नास्माकं स्वास्थ्यं न केनापि
प्रकारेण परोपजीव्यमासीत्। आयुर्वेदमनालोच्य परैः प्रकाशितं
एकैकं स्वास्थ्यानुवृत्तिकरं श्रुत्वा गौरबुध्या रताविस्मयं
प्रशंसामः। किमतः परं अपत्रपावहमस्माकं
भारतीयानाम्। अस्य कर्कशस्य परिणामस्य
स्नमूलमुत्सादनायायुर्वेदपारावारीणैः चरकसुश्रुता-
ष्टांगसंग्रहादयो ग्रंथास्तत्त्वतोऽध्ययनाध्यापनविधिना

संप्रदायशुध्दतां नेतव्याः। तेनच्च जना न संशयावकाशं लभेरन्। इति विद्यावदातमतीन् विदुषः संप्रार्थ्य विरमामि प्रदर्शिताच्चापलात्।

यदत्र स्खलितं किंचित्तत्सर्वं क्षम्यतां बुधैः॥

स्वनामलाञ्छनम्.

